द्रं मं[1] हं भ्रं सदा शैवं बं भ्रं मायास्वरूपकम् ।
क्लीं त्रीं श्रीं ह्रीं विकन्थुं [2]क्ष्मां क्ष्मीं क्ष्मूं क्ष्मौं भ्रूं भ्रुं जूरवम् ॥ ७२ ॥

आं रं [3]ऊ ह इह द्वन्द्वयत्की[4]ञ्श्रीं ज्रीं भ्रीं बुसुंबुसुम् ।
गान्धारं सर्वदं कामं नामनाशकलं तथम् ॥ ७३ ॥

आयुःप्रदमदं [5]मध्यमंक्षं लोके(शं)[श] पञ्चमम् ।
मसंज्ञा ज्रीं ज्रे ज्रै भ्रुं भ्रलेन भ्रूं[6]धैवतं चारुभूषणम् ॥ ७४ ॥

निषादं कण्ठजं हास्यं रजनिश्वं[7] भवं शिवम् ।
आयासं गंगराजेन्द्रं जीवरूपं हरीश्वरि ॥ ७५ ॥

स्थानपूज्यं सुपूज्यं च सप्तत्रिंशतं शतम् ।
इति देवि समाख्याता स्वरनाम प्रकीर्तिताः ॥ ७६ ॥

॥ इत्यौमापते गीतशास्त्रे स्वरनामप्रस्तारो नाम पञ्चमोऽध्यायः ॥

---

## ॥ अथ षष्ठोऽध्यायः ॥

अश्वरत्नशशाङ्कं च स्वराणां कीर्तितं कथम् ।
प्रत्येकं वर्तनं लोके समाचक्ष्व महेश्वर ॥ ७७ ॥

ईश्वर उवाच—

एतेषां स्वरभेदं हि जानीते गानबान्धवः ।
कतिस्वरेण जानन्ति गन्धर्वाः पन्नगाः किल ॥ ७८ ॥

सर्वस्वरमविज्ञाय मनुष्याः स्वरसप्तके ।
वर्तन्ते सांप्रतं देवि दुर्बोधं स्वरभेदनम् ॥ ७९ ॥

स्वरत्रिपञ्चकं षड्जे षोडशं वृषभस्वरे ।
दशसप्तोत्तरं गान्धे त्रिषट्कं मध्यमस्वरे ॥ ८० ॥

---

1. B. 'भ्रं' for 'भ्रं'
2. B. 'त्थुं' for 'न्थुं'
3. B. 'आ ई' for 'आं रं'
4. B. 'यक्री' for 'यत्की'
5. B. 'प्रमदं' for 'प्रदमदम्'
6. B. 'क्रूं' for 'भ्रूं'
7. B. 'श्वं' for 'श्वं'

एकोनविंशतिश्चेति पञ्चमे विंशतिस्तथा ।
धैवते च निषादे च स्वराणामेकविंशतिः ॥ ८१ ॥

एकं शतं त्रयस्त्रिंशत्सहितं च चतुष्टयम् ।
अयुतं (च) नाहतं प्रोक्तं शेषत्रितयनिर्णये ॥ ८२ ॥

मार्गमानन्दहास्यं च संभाष्यं च कलध्वनिः ।
शोकश्च कलहश्चैव हीत्येते सप्तभेदनम् ॥ ८३ ॥

एकविंशतिभेदेन स्वराणां तत्त्रयं भवेत् ।
मन्द्रं मध्यं च तारं च ह्यनुतारं चतुर्विधम् ॥ ८४ ॥

मन्द्राच्च त्रिगुणं मध्यं मध्यात्तारं तु षड्गुम् ।
तारतो द्वादशगुणमनुतारं प्रकीर्तितम् ॥ ८५ ॥

इत्येवं वर्तते लोके मध्ये चोर्ध्वे रसातले ।
कला स्वरः श्रुतिश्चेति समानार्थाः प्रकीर्तिताः ॥ ८६ ॥

अनाहतायुतं देहे मन्द्रमध्यादिभेदतः ।
त्रिधा भिन्नं चतुर्धेति चोदात्तादिप्रभेदतः ॥ ८७ ॥

तत्सप्तधा प्रभेद्येति षड्जादिस्वरसप्ततः ।
तत्सप्तत्रिंशदधिकशतं चेति प्रकीर्तितम् ॥ ८८ ॥

द्विसप्ततिसहस्राणि स्वराणामित्यनेकधा ।
इति देवि समाख्याता गीतविद्याविशारदैः ॥ ८९ ॥

॥ इत्यौमापते गीतशास्त्रे स्वराधिकारो नाम षष्ठोऽध्यायः ॥

---

## ॥ अथ सप्तमोऽध्यायः ॥

इच्छामि श्रुति[1]संमूर्तिं श्रोतुं तत्त्वेन शङ्कर ।

ईश्वर उवाच—

तालमात्रा यथोत्पन्ना श्रुतीनां तु तथा स्वरैः ॥ ९० ॥

---

1. B 'स्वर' for 'श्रुति'

त्रयः कालाः समुत्पन्ना द्रुतमध्यविलम्बितैः ।
तेषां विलम्बिते यत्तु संभूतं कथयामि तत् ॥ ९१ ॥

चत्वारिंशत्तथाष्टौ च श्रुतयः संभवन्ति ताः ।
षड्जग्रामं समारभ्य मध्यमान्तं त्रयं [1]त्रयः ॥ ९२ ॥

मध्यातितारपर्यन्तं प्रत्येकमृतुसङ्ख्यया ।
गान्धारे द्वादशगुणमिति प्रोक्तं च शम्भुना ॥ ९३ ॥

स्वरानन्ताः प्रजायन्त ईश्वरस्य महात्मनः ।
पञ्चवक्त्राद्यथा शुद्धा द्वाविंशतिरतः श्रुतिः ॥ ९४ ॥

षड्जे ऋषभगान्धारे मध्यमे पञ्चमे ततः ।
धैवते च निषादे च ह्यनुताराष्टकं भवेत् ॥ ९५ ॥

षड्जादिमध्यपर्यन्तमेकैका तु कला भवेत् ।
पञ्चमस्वरमारभ्य निषादान्तं कलाद्वयम् ॥ ९६ ॥

अनुषड्जानुतारं वा मात्रा द्वादशतो भवेत् ।
इति देवि समाख्यातं श्रुतिद्वाविंशकं पुरा ॥ ९७ ॥

कला सरीगमे चैव द्विकला च पदानि च ।
अनुषड्जे द्वादश कला अवर्णसहितास्ततः ॥ ९८ ॥

तालस्य हस्ताभिनयं श्रुतीनां गणना तथा ।
एतद्रहस्यं प्रेम्णा ते मया कथितमंम्बिके ॥ ९९ ॥

एवं क्रमाच्छ्रुतीनां तु ज्ञात्वा सङ्ख्यां महेश्वरि ।
गीतानुसारिणामेवं तालानां गणयेत् कलाम् ॥ १०० ॥

॥ इत्यौमापते गीतशास्त्रे श्रुतिप्रस्तारो नाम सप्तमोऽध्यायः ॥

1. B 'मध्यमान्तत्रयं युतं' for 'मध्यमान्तं त्रयं त्रयः

# ॥ अथाष्टमोऽध्यायः ॥

मूर्छनां श्रोतुमिच्छामि विस्तरेण महेश्वर ।

ईश्वरः—

सप्तस्वराणां नामादि वर्णारोहावरोहतः ॥ १०१ ॥

सप्तधा द्विगुणाख्यानात्संभूता देवि पार्वति ।
अष्टाधिका(थ)मूर्छनानां नवतिर्देवि जायते ॥ १०२ ॥

जातमेकोनपञ्चाशत् आरोहात्तानमीरितम् ।
अवरोहेण यज्जातमवत्तानं तु तद्भवेत् ॥ १०३ ॥

## स्वरवर्णम्

सरिगमपधनि :—१. रिगमपधनि[1]
२. सगमपधनि
३. सरिमपधनि
४. सरिगपधनि
५. सरिगमधनि
६. सरिगमप(ध)नि
७. सरिगमपधे (निना) [त्या] रोही च

तद्वत् क्र(म)[मात्]—१. धप(ग)मगरिस
२. निपमगरिस
३. निधमगरिस
४. निध(स)[प]गरिस
५. निधप(ग)[म]रिस
६. निधंप[म]ग(रि)स
७. निधपमग(स)[रि]

(निधपमगरिसं। निधपमगरिस)—अवरोही च

1. These are Shāḍava Krama Tānas.

स्वराणां सप्तधारोहावरोहः स तु मूर्छना ।
एषां स्वराणां प्रत्येकम् आरोहात्तान उच्यते ॥ १०४ ॥

इत्येकोनपञ्चाशज्ज्ञातव्यं स्वरमण्डले ।

॥ इत्यौमापते गीतशास्त्रे मूर्छनाक्रमो नामाष्टमोऽध्यायः ॥

---

## ॥ अथ नवमोऽध्यायः ॥

चतुर्दशैव कोष्ठानि क्रमाद्वीथीषु सप्तसु ।
साध्यादयः स्वरास्तेषु स्वराः षण्णवतिस्त्विह ॥ १०५ ॥

एकैकं श्रुतिविद्धाः स्युः साध्याः कोष्ठेषु वक्रतः ।
कोष्ठमष्टममारभ्य साध्येषु श्रुतिसप्ततः ॥ १०६ ॥

वीथ्यन्ते षट्श्रुतिस्थाः स्युर्न्यूनास्ते रिगमाः पधौ ।
कोणावसानभावात्तु निषादो नैव विद्यते ॥ १०७ ॥

तस्मात् षण्णवतिस्तन्व्यां चोदितास्तानमण्डले ।
इत्थं मिते मण्डलेऽस्मिन् स्वरश्रुतिविभेदनम् ॥ १०८ ॥

इत्येतद्देवि ते प्रोक्तं तानमण्डलमुत्तमम ॥

॥ इत्यौमापते गीतशास्त्रे मूर्छना गेयप्रकरणं नाम नवमोऽध्यायः ॥

## ॥ अथ दशमोऽध्यायः ॥

वीथीषु सप्तसु चतुर्दश कोष्ठक्लृप्त्या
कोष्ठानि चाष्टनवतिस्वरसंभवानि ।
आरभ्य मध्यममिहाधिपतिः स्वरः स्या-
द्वीथीशिरस्सु सकलेष्वपि तत्र तत्र ॥ १०९ ॥

ब्रह्माणी मण्डलं चेति तन्व्यः पञ्चोत्तरं शतम् ।
न्यूनपञ्चाशदायामविस्तारं चतुरश्रकम् ॥ ११० ॥

अनुतारमपेक्ष्यैव कोष्ठान्ते तत्पुरस्सरम् ।
मध्यमतं(त्रि)[त्री]श्रुतयो नीचायाः प्रथमतन्त्र्याः स्युः ॥ १११ ॥

मध्यमतस्त्रीणि स्युः सरिगमपधतः क्रमादेवम् ।
पधनिसरिगे क्रमोऽयं नीत्वा पञ्चोत्तरे शतके ॥ ११२ ॥

तुल्ये कलाश्रुतिरिति चित्रमिदं मण्डलं कलितम् ।

॥ इत्यौमापते गीतशास्त्रे मूर्छनामण्डललक्षणं नाम दशमोऽध्यायः ॥

---

# ॥ अथैकादशोऽध्यायः ॥

प्रणिपत्य महेशानी शम्भुमासीनमन्तिके ।
पप्रच्छ ब्रूहि शुद्धान् वै रागान् त्वन्मुखसंभवान् ॥ ११३ ॥

ईश्वर उवाच—

शृणु देवि मया पूर्वं सप्त सङ्कोचिताः स्वराः ।
प्रातिलोम्यानुलोम्येन स्वरजा वर्ण्यते ततः ॥ ११४ ॥

ममापगममा गागा पममा पगरीगम ।
सागगगगामापा गपापाधधनीनिनि ॥ ११५ ॥

धधाधा इत्ययं कामो (दवि)[ऽन्धोळि]नामा समीरितः ।
ससगामा सरीसासा पपारिरि ततोन्धला ॥ ११६ ॥

धधागगारिसा मध्यगान्धारसंज्ञितः[परः] ।
द्रिसनीपापमापम्मा गगमा शाह्व(यः)[री][1]ततः ॥ ११७ ॥

गामगारिरिरीसासा ससानिनिनिसाधधा ।
[2]कावार्तिरेवमुक्तोऽयं नागध्वनिरथोच्यते ॥ ११८ ॥

1. This raga is called 'शाह्वरी' or 'शङ्करी' in the description of Janya Ragas in sl. 158.

2. This raga is called खंबावती in sl. 159.

धरिमगारिरिमागागा मगरीरिरिगारि सा ।
गगाधधपपा गाप पपपा धधपम्मदाम् ॥ ११९ ॥

एवं दिव्यावती प्रोक्ता प्रोच्यतेऽथ तरङ्गिणी ।
सासमारिगमागारीरिसरीमाससा ततः ॥ १२० ॥

सारिमापमगारी स साससेति(रु)[कु]रुञ्चि(ता)[का][1] ।
सानिनीधधपापारा[2]पापपानिधपारगाः ॥ १२१ ॥

नेतिभल्ला ततः प्रोक्तो मेघरञ्जी समीर्यते ।
सरीगमामपापापापपापतिमिरीमिताः ॥ १२२ ॥

वृषगन्धामार्ग(व)[पद्म]पुलिन्दी[2]काम[दा]न्धला ।
गन्धाराहेरितं वार्ति सर्पिर्दिव्या तरङ्गिणी ॥ १२३ ॥

कुरु(ण्ठी)[ञ्ची] भल्लमेघाख्यो धातुपञ्चम आहिरः ।
तुरगी मधु पौराणी दिवी सैन्धवगान्धिके ॥ १२४ ॥

स्वभावनप्यचोगारी तांकस्योत्फुल्लिका ततः ।
अम्बिका वेदसत्यं च कामं धूमं च पिङ्गलम् ॥ १२५ ॥

एते षट्त्रिंशदाख्याताः शुद्धा रागास्तु पार्वति ।
उत्पत्तिमेषां वक्ष्यामि स्वरजातिमनन्तरम् ॥ १२६ ॥

ससनीरिगरीपापमपामवृषभाह्वयः ।
ससनीधममागागमपपासरिसा ततः ॥ १२७ ॥

रक्तगान्धाररागोऽयं मार्गरागस्तु कथ्यते ।
धधापपधपागाग सगगा मम इत्यसौ ॥ १२८ ॥

गगमारिरिरी गारिमपगा गग इत्यपि ।
पद्मरागस्त्वयं देवि पुलिन्दी मगारिसारिस ॥ १२९ ॥

---

1. This raga is called 'कुरुञ्ची' in sl. 162 and in 'C'

2. The ten Ragas from कामोद to मेघ have already been described and they are repeated in the list.

इत्येवं कथिता धातु[रागो] गौडस्ततो भवेत् ।
धधनीसाधधापापा पमारीरिग इत्यपि ॥ १३० ॥

धातुगौडस्त्वयं देवि पञ्चमं तु ततः शृणु ।
सासासरिरिगागांममापपापपधापमा ॥ १३१ ॥

गसा पञ्चमरागोऽयमाहिरश्चोच्यते क्रमात् ।
रिगारिरिरिगारीरि गारिरीगा रिरी ततः ॥ १३२ ॥

पाममारिगरीरी स रिगमैस्तुरगी भवेत् ।
गमगा सरिगा माध पामगारिग इत्यपि ॥ १३३ ॥

एषा मधुकरी प्रोक्ता पौराणी सम्यगुच्यते ।
ससरीरिरिरी गाग गगारि गगमामग ॥ १३४ ॥

पसाससरीरीरि दीवीरागस्ततो भवेत् ।
रिरीगमागमापापगगगासारिरिर्भवेत् ॥ १३५ ॥

सानीधपा धधनिसा रिगमा सैन्धवी ततः ।
पपामगममागागरिरिरीरिससाससः ॥ १३६ ॥

गन्तिका(रो)मोदमुक्तोऽयं स्वभावक्रीरथोच्यते ।
रिरीगारिरिमामामगारिरीगारिरीस्ततः ॥ १३७ ॥

मापपामगरीरीरिगरिसा नयन(की)[क्रि]या ।
पपाधधपपामागगरिरीगगरी ततः ॥ १३८ ॥

चौहार्तिरेवमुक्तोऽयं ताङ्गश्यायामथोच्यते ।
मपामगरिगारीगमापमामगरी गरी ॥ १३९ ॥

सरीगरिधमापामारिगमोत्फुल्लिका ततः ।
पपपामापमा गागगगमागरिरीममा ॥ १४० ॥

एवमेवाम्बिका प्रोक्ता ह्येकत्रिंशदनुक्रमात् ।
उपदिष्टैर्मया पूर्वमृषिभिः समुदीरिताः ॥ १४१ ॥

मयैव तुभ्यं कथिता रागाः पञ्च महेश्वरि ।
अप्रसिद्धाभिधानांस्तान् शृणुष्व गदतो मम ॥ १४२ ॥

वेदः सत्यं च कामं च धूमं पिङ्गलमेव च ।
मयैव पञ्चभिर्वक्त्रैः सृष्टाः पूर्वं कुतूहलात् ॥ १४३ ॥

एतेषां वक्ष्यते देवि पञ्चानां लक्षणं मया ।
उच्चारणादुदात्तादिस्वरै रागस्य संभवात् ॥ १४४ ॥

तस्माद्वेद इति ख्यातः प्रणवद्वयसंयुतः ।
उदात्तेनानुदात्तेन स्वरितेन च येन च ॥ १४५ ॥

गीयमानतया वेदमित्याहुः प्रथमं जनाः ।
सत्यस्य भेदाः सप्त स्युरेकोदग्रगतिः स्मृता ॥ १४६ ॥

चतुष्पाद्यष्टपादी च द्विधारोहावरोहतः ।
एकपादी द्विपादी च प्रोक्तमेकैकमम्बिके ॥ १४७ ॥

कामस्य पञ्चधा भेदाः कथ्यन्ते गिरिकन्यके ।
स्पर्शद्विगुणके द्वे च तस्यारोहावरोहतः ॥ १४८ ॥

अर्धमध्यावरोहेण भवेदेकैकमम्बिके ।
अञ्जसा त्वेकमुद्भूतमेभिः पार्वति पञ्चधा ॥ १४९ ॥

धूमरागो भवेदेको द्विविधं पिङ्गलं तथा ।
पञ्च रागा इति प्रोक्ता ह्येकत्रिंशदथोच्यते ॥ १५० ॥

सप्तस्वराणां ज्ञातव्यं प्रातिलोम्यानुलोम्यतः ।
अतः संभूय शुद्धास्ते षट्त्रिंशत्सङ्ख्ययोदिताः ॥ १५१ ॥

सालगस्य भवेदेकमुत्पत्तिः कमलानने ।
कामे मालवकेदारश्रीच्छायाङ्ग्यः समुत्थिताः ॥ १५२ ॥

अष्टभेदा वराटी स्याद्धूमे देशादिकाः क्रमात् ।
वृषे तु ललिता काली नीचमङ्गलकैशिका ॥ १५३ ॥

रक्तगन्धाररागस्तु[रागात्तु] मध्यमादिः समुत्थितः ।
मार्गरागो वन्ध्य एव तत्र जन्म न कस्यचित् ॥ १५४ ॥

पद्मे कन्नटवंकालदाक्षिणात्ये समुत्थिते ।
मञ्जरी[1] द्रावणी श्रीकण्ठो नादान्तरिता ततः ॥ १५५ ॥
पुलिन्दी स्वरसंभूताश्चत्वार इति कथ्यते ।
सौराष्ट्रेव गुप्तौ गौर्जरिः पूर्वयुतरीति गौडाः स्युः ॥ १५६ ॥
कामोदधिस्वरभवाः पञ्चैते वारिधाविवा[2] अमृतला ।
अन्धाडयामत्र संजातो हिन्दोल इति कथ्यते ॥ १५७ ॥
माध्यगान्धाररागस्तु वन्ध्य इत्यभिधीयते ।
शाह्वर्यास्तु[3] समुद्भूता मल्हरी [4]चाहितापि च ॥ १५८ ॥
कम्बावतीभवा नाट्टा मालवश्रीमुखारिका ।
नागध्वनौ तु वङ्गाल सोमरागोऽथ तुण्डिका ॥ १५९ ॥
दीव्यावत्यास्तगलगो घण्डिकाराग इत्यसौ ।
देशा भूपालदेवक्या वेला शाखाम्बुधिस्ततः ॥ १६० ॥
तरङ्गिण्यास्समुद्भूताः पञ्चैते रागपुङ्गवैः ।
छायालककुरुञ्ची च सुद्धाहिन्यथ देशिका ॥ १६१ ॥
कुरुञ्ची स्वरसंभूताः क्रिय इत्यभिधीयते । त्र
भल्लातके समुद्भूतः श्रीकण्ठ इति च स्मृतम् ॥ १६२ ॥
मेघरञ्ज्यां वसन्तस्तु धम्माली च समुत्थिताः ।
गौडकण्ठ्या गौडाभ्यां दीपपूर्णादिके क्रमात् ॥ १६३ ॥
धातोः शौण्डः समुद्भूतो पञ्चमेन तु कश्चन ।
छायागौडश्च गौरी च सालगो।भैरवस्ततः ॥ १६४ ॥
गुण्डक्री चैव चत्वार एवमाहिरसंभवाः ।
तुरगी स्वरसंभूताच्छलिका राग इत्यसौ ॥ १६५ ॥

---

1. C. पद्मिनी.
2. A. half-sloka appears to be missing here.
3. B. 'शक्कर्यास्तु'
4. C. वाहितापि

वन्ध्या मधुकरी च्छाया पौराणी स्वरसंभवा ।
मगधेन ससौराष्ट्रा हिनामा(?)इति च क्रमात् ॥ १६६ ॥

बीथीस्वरसुसंभूतः कोलाहल इति स्मृतिः ।
गौधः सैन्धवसंभूत एवान्भरणगौडकौ ॥ १६७ ॥

गन्धीकामोदरागे तु नीलोत्पल इति स्मृतः ।
नेत्रक्रीस्वरसंभूता रामक्रीरिति कथ्यते ॥ १६८ ॥

चौहारिरेव ताङ्केशी स्वभावकी च वन्ध्यका ।
वसन्तोर्लुण्ठिकायां तु महुटीरागसंभवः ॥ १६९ ॥

अम्बिका स्वरसंभूता सन्नाशी शुद्धभैरवौ ।
वेदः सत्यं विना रागाश्चतुस्त्रिंशदिहेरिताः ॥ १७० ॥

शुद्धास्तेभ्यः समुद्भूताः सरागा अष्टषष्टिका ।
शुद्धसालगयोर्जातो वसन्तो नवषष्टिकः ॥ १७१ ॥

द्वात्रिंशदवशिष्टास्तु रागे वेदे समुत्थिताः ।

इत्यौमापते गीतशास्त्रे शुद्धरागलक्षणं नाम एकादशोऽध्यायः ॥

---

## ॥ अथ द्वादशोऽध्यायः ॥

एतेषां छायया जाताश्छायालकसमाह्वयाः ।
असङ्ख्यातास्तु ते तेषु शतमेकोत्तरं क्रमात् ॥ १७२ ॥

रागाङ्गरागा भाषाङ्गक्रियाङ्गादिभिरीरिताः ।
तानहं संप्रवक्ष्यामि यथावदनुपूर्वशः ॥ १७३ ॥

मध्यमादिश्च देशीवहिन्दोलस(तुड्डि)[तोडि]नामकः ।
वराटी मालवश्रीश्च श्रीवे(का)[गा]लक(गो)[गु]र्जरी ॥ १७४ ॥

शङ्कराभरणाख्यश्च धन्याशी देवशाखिका ।
गौडश्च भैरवी चैव सोमो घण्टावती ततः ॥ १७५ ॥

घण्टिका गुण्डकी चैव केशी शुद्धवराटिका ।
रागाङ्गान्येवमुक्तानि विंशतिस्तदनन्तरम् ।। १७६ ॥

भाषाङ्गानि २०

ललिताख्या ततो वेलावली द्राविणिनामकाः ।
नट्टनारायणा पश्चाद्दाक्षिण्याश्च ततः परम् ॥ १७७ ॥
बृहती तदनुप्रोक्ता श्रीकण्ठः पल्मञ्जरी ।
भम्माली च तथा सुद्रा फनी[1]शालाम्बुधिस्ततः ॥ १७८ ॥
सालवाहिनिसौराष्ट्रौ कालिन्दीसुरसैन्धवी ।
देशाग्री चैव कर्णाट वं(का)[गा]लो भाषितैव च ॥ १७९ ॥
गोल्लीति भाषांगान्येवं विंशतिः कथितान्यथ ।

क्रियाङ्गानि २०

छायाङ्गी[2]कैशिकी चैव नादान्ताच्छलिकेति च ॥ १८० ॥
नीलोत्पली च गान्धारी मगधाख्यस्ततः परम् ।
कोलाह(लो)[ल] एल्लहश्च गलरञ्जकनामकः ॥ १८१ ॥
कुरुन्दो ललिता चैव भैरवाख्योऽथ मल्हरी ।
छायागौडश्च गोडश्च गौरी पूर्णादिका ततः ॥ १८२ ॥
माडिकाख्या मुहुरिका महाराष्ट्री ततः परम् ।

उपाङ्गानि ४१

क्रियाङ्गा विंशतिः प्रोक्ता उपाङ्गो (अ)[थ]थ वक्ष्यते ॥ १८३ ॥
दक्षिणाख्यश्च सौराष्ट्रस्तथा मालवगौडकः ।
तलाख्यो[3] रामकृतिरवसानं च नाङ्गली ॥ १८४ ॥

---

1. B. 'फीनी' for 'फनी'
2. B. 'हायाङ्गी' for 'छायाङ्गी'
3. C 'स्नगलाख्यो' for 'तलाख्यो'

प्रतापाक्षी वेशरश्च प्रतापश्शृङ्गिनामका ।
त्रिवेला वली भैरवश्च सिंहाली देवबालकः ॥ १८५ ॥

वङ्गाली माल्वी[1]पा(दि) [डी] वङ्कालो घूर्जटीरीततः ।
छायन्दरिनामा च सुभगी गद्यरागकः ॥ १८६ ॥

तथा ध्वनिविलासश्च स्वरां(गान्मग्रि) [श्री भृङ्गि][2]नामकः ।
उन्मत्तरागा इत्येव चत्वारिंशदुपाङ्गजाः ॥ १८७ ॥

सम्भूयैकोत्तरशतं जन्मसंबन्धजा स्मृताः ।
रागच्छायानुकारित्वाद्रागाङ्गानि विदुर्बुधाः ॥ १८८ ॥

रागे मनोगते चापि शनैर्य उपलभ्यते ।
स तु भाषाङ्ग इत्युक्तः क्रियाङ्गस्त्वथ कथ्यते ॥ १८९ ॥

रागे जातेऽपि शनकैर्गतागतिविधानतः ।
क्रियाङ्गस्योपलब्धिः स्यादुपाङ्गस्त्वथ वक्ष्यते ॥ १९० ॥

उपसामीप्यतो वृत्ते रागानामप्युपाङ्गता ।
सम्भूयैकोत्तरशतं शुद्धछाया समीरिताः ॥ १९१ ॥

येषां तु जननी तावत्स्वरजातिरुदीर्यते ।
शुद्धं च शिवरूपेण शक्तिरूपेण सालगम् ॥ १९२ ॥

द्वयोर्मिश्रं तु सङ्कीर्णमतस्ते त्रिविधा मताः ।
वराटीललिताभ्यां च शुद्धाद्वृषभरागतः ॥ १९३ ॥

उत्पन्नोऽयं वसन्तश्च संकीर्णत्वेन लक्ष्यते ।
सरीगमपधन्नीस सगसा सा तु मध्यमः ॥ १९४ ॥

ससमागगमा पापा मगादेशीति कथ्यते ।
संगसागरिगा चैव हिन्दो[ल]स्तु भवेत्ततः ॥ १९५ ॥

---

1. C. 'चाद्री' for 'पादि'
2. C. 'स्वराङ्गो मृग्नि' for 'स्वराङ्गान्मग्रि'

[1]सनिन्धपगरिंकाग सा तु (स्त्री) [श्री ?]ति निगद्यते ।
रिगमूनं यथामार्गं [2]पदाग्रे जायते ततः ॥ १९६ ॥
सनिंदपं मगरिसा गसा (तुण्डी) [तोडी] निगद्यते ।
रिगमूनं यथामार्गं मालवश्रीरिसादिभिः ॥ १९७ ॥
सनिन्धपं मापाधैश्रीरागस्त्वभिधीयते ।
पगममगरीसासैर्वङ्गालः कथितो बुधैः ॥ १९८ ॥
धनीधसनिपापम्म गरीभिश्शुद्धगुर्जरी ।
सनिन्धपा[3]भ[ग]सरिगदैश्शङ्करभूषणम् ॥ १९९ ॥
सगं सम पुनः कुर्याद्धन्नासी जायते ततः ।
सनिन्धपैर्मगरिकैः देशाखी[क्षी]मिश्रमम्मपैः ॥ २००
सरिसा गरिसा पापा स गौडं जायते ततः ।
मगगा मौमपा धैसा प्रोक्तोऽयं भैरवी ततः ॥ २०१
सनिन्धपं मगरिमं सोमरागस्ततः परम् ।
सगमा मपगाधैसा घण्टारागससा ततः ॥ २०२ ॥
सरिगागमगा पापा स देशीरागसंज्ञकः ।
गगाममरिगामागाधमगुण्डक्रिया ततः ॥ २०३ ॥
सगम्मपगमा[4]पापा कैशिकारागमामगः ।
ततः परं वराटी च सनि[5]धमपगारिसा ॥ २०४ ॥
संपूर्णस्वरसम्भूति नाटे ग[6]निसनीगमाः ।
सगमन्निगमं पादा रिरिसा ललिता ततः ॥ २०५ ॥

---

1. This line is not found in B and C.
2. B and C. 'वराटी' for 'पदाग्रे'
3. C. 'मगसरीगसैः' for 'मसरिगदैः'
4. B. 'पामा' and C. 'पागा' for 'पापा'.
5. C. 'धपम' for 'धमप'
6. C. 'रि' for 'नि'

सैनिन्धपं मगरिमं वेलावली ततः परम् ।
समंगा पम[1]गा(सा)मा सा प्रोक्तेयं द्रावणी ततः ॥ २०६ ॥

नट्टनारायणी रागो गरिसा पमसामपाः ।
समगं पमगं सारिरिरिसा[2](दि)[द]क्षिणा ततः ॥ २०७ ॥

सनिन्धपं सरिगपा बृहती राग उच्यते ।
(गि)[ग]रिसम्मरिसा धैसा श्रीकण्ठः प्रोच्यते ततः ॥ २०८ ॥

सरिगापमगा सासा निधपा मगगा ससा ।
[3]श्रीकण्ठ(स्ये)[स्त्वे]व मु(ष्को)[क्तो]ऽयं प्रयु(क्ते)[क्तो] हलमञ्जरी॥२०९॥

सनीमगरि(का)गापा पा(द)[भ ?]म्माली[4]गगमास्त(कम्)[तः] ।
सससा भममा गारिधपं सुद्राहिनी ततः ॥ २१० ॥

(शाक)[साकां]बोधी[5] समा गापा मपाधैसा ततः परम् ।
धनिसा सनिपा माप सालवाहिनि सासगा ॥ २११ ॥

सगमा[6](प्रिव)[निम]मापापा सौराष्ट्रा हि ततः परम् ।
कालिन्दीरेव(मुक्तो)[गुप्तो]ऽयं सनिन्धापा सरीगमा ॥ २१२ ॥

सौराष्ट्रसैन्धवी पामा गमा पागा ततः परम् ।
सनिन्धपम्मगरिग देशाखा विश्रमम्म[7]पम् ॥ २१३ ॥

मगारिरि गमापाधै कर्णाटो वंगलस्ततः ।
गगसाभ्रमरी पामा गोली रागस्ततः परम् ॥ २१४ ॥

1. C. 'गामासा' for 'गासामासा'
2. C. 'द' for 'दि'.
3. C. 'श्रीकण्ठस्त्वेवमुक्तोऽयं प्रयुक्तो' for 'श्रीकण्ठस्येवमुष्कोऽयं प्रयुक्ते'
4. C. 'गमगाः' for 'गगमाः'
5. C. 'कांबोजी' for 'कांबोधी'
6. C. 'निममापासौ' for 'प्रिवमापापा'
7. B. 'पमम्' and C. 'परम्' for 'मपम्'

सगमा गमसा पामा [1]पमच्छायाङ्गितस्ततः ।
धनिसा गरिसा पापा (स)सगसा कैशिकेति च ॥ २१५ ॥

मसाधपागमापामा नाट्टान्तरि ततः परम् ।
गरिसाधनिसामापासरिगाच्छलिकस्ततः ॥ २१६ ॥

गरिमासरिमापामा नीलोत्पलिगसा ततः ।
सगसामपगान्धारी मगधाख्यस्ततः परम् ॥ २१७ ॥

पमानिगारिसागापा सगसानिगसा ततः ।
धनिसागरिमाधैससगं कोलाहलस्ततः ॥ २१८ ॥

गरिमं प(त)[ध]नी सानी दमपं गमपं(थ)[ध]नि ।
धपंमगमगं रीस्यात् बोडि[2]तध्यस्तगुत्तयोः ॥ २१९ ॥

रिगमून[3]सि(मि)निन्धं च पगंपमगरीसयोः ।
सनिन्धपम्मगरिकं रामक्रीपगरीसकम् ॥ २२० ॥

पवर्गे ललिता जाताऽशुद्धं सनि(द)[ध]पामगाः ।
सनिन्ध[4]ममपाधैस सगंरिपसमंकृतः ॥ २२१ ॥

गौडींमालवजातस्य तद्यस्तं मालवी ततः ।
सगंसमपुनः कुर्या(त्)धन्नाशी जायते ततः ॥ २२२ ॥

क्षीयन्ते च कलामष्टस्वरं कर्णाट[5](नील)[गौड]कम् ।
ससारिरींगरीपाप एल्हारागस्ततः परम् ॥ २२३ ॥

धपंमंग[6]मधसानिगतुरञ्जकनामकः ।
ससानिनीगामापा गरिसा[7]प कुरुञ्जिका ॥ २२४ ॥

1. B. 'मप' for 'पम'.
2. C. 'तद्व्यस्त' for 'तद्व्यस्त'
3. C. 'सनिद्धं' for 'सिमिनिन्धं'
4. C. 'पम' for 'मम'
5. B. 'गोलकम्' and C. 'गौडकम्' for 'नीलकम्'
6. C. 'मपंसानि गलरञ्जक' for 'मधसानिगतुरञ्जक'
7. C. 'च' for 'प'

(¹न)[ग]मापधनि(द्र)[ध]पम भैरवाख्यस्ततः परम् ।
सनिन्धपं मगरि²(क)[ग]रिपं गरिसमल्हरी ॥ २२५ ॥

गनिसा धनिसा पापा सगौपूर्णादिराग(³गः)[काः] ।
ससांनिनी गरीमापा नाडिकाख्या स⁴सारिमाः ॥ २२६ ॥

सनिगधरिगापपा मुहरी पगसापमा ।
महाराष्ट्री⁵(स)गपम मा सरिसा गरिसापम ॥ २२७ ॥

धनीससनिगा⁶पामा दाक्षिणाख्यं ततः परम् ।
सरिगं पमगं साधास्त⁷श्चलाख्यो निपाधमः ॥ २२८ ॥

अवसानं निम⁸पमं सरिसं समगं मपः ।
नाङ्गुलीनिधपाधैसै प्रतापाक्षी च कथ्यते ॥ २२९ ॥

सगरीगमपानीस विपरीतं च वेसरः ।
गगमा पगमाधैस प्रतापपगसानि स ॥ २३० ॥

गरीगमरि सानीस⁹ गिरिसश्शृङ्गिनामकः ।
निधनी सधनी पामा सिंहावलीमपारिसः ॥ २३१ ॥

पमपापं गलोधैव समपानी ततः परम् ।
गिरिसा मपधाधैस धूर्जटी सगरीमपः ॥ २३२ ॥

---

1. C. 'गमापधनिसापम' for 'नमापधानदपम'
2. C. 'पा' for 'क'
3. B. 'काः' for 'गा'
4. C. 'गा' for 'सा'
5. B omits 'स'
6. C. 'मापादाक्षिणाख्यः for 'पामादाक्षिणाख्यं'
7. C. 'सक' for 'तश्र'
8. C. 'मपं' for 'पमं'
9. C. 'गरिस' for 'गिरिस'

सेसमा रिरि[1]पाधेस निपमा च्छायसुन्दरी ।
[2][स]सरीगमपाधेस निधनी सुभगी ततः ॥ २३३ ॥
गमपामपमाधेस गरिसा [3](गत्यरागतः) [गघरागकः] ।
धनीससनिधामापा सरीध्वनिविलासकः ॥ २३४ ॥
सगरीरिगपामाप स्वरांगस्समपा[4](ति)[नि] च ।
मपधागपधामोमो गनिसा मृगिनामकः ॥ २३५ ॥
सरिपानिसधामागा उन्मत्तस्सरिगामप ।
शृणुष्वावहिता देवि स[5](गगां)[शशां]काधिकं शतम् ॥ २३६ ॥

॥ इत्यौमापते गीतशास्त्रे[6] रागप्रस्ता(र)[रो]नाम द्वादशोऽध्यायः ॥

---

## ॥ अथ त्रयोदशोऽध्यायः ॥

रागप्रकाशनायैव रागजा(ती)[ति]रुदीरिता(:) ।
एतेन प्रथमं जातं रूपकत्वेन लक्ष्यते ॥ २३७ ॥
त्रिंशत्संख्यानि (का)[ता]नि स्युः एतेषां लक्षणं ब्रुवे ।
शान्तं शूलिकरं भ्रान्तशशिपद्मं हयान्वितम् ॥ २३८ ॥
दीप्तं शास्त्रं गुरुं हंसं कान्तं सूर्यकरं प्रभुम् ।
धेनु व्योमधृतं नाट्यं बालं वृद्धं शुकं भृगुम् ॥ २३९ ॥
हरिजं चरितं कामश्रीर्विलम्बं स्वरूपकम् ।
एतानि (के)[ते]षां नामानि लक्षणं त्वथ वक्ष्यते ॥ २४० ॥
स्वरैश्च षड्जगान्धारपञ्चमैः प्रथमं भवेत् ।
उद्ग्राहा.........न्तर्या(दो)[भो]गस्तु अष्टौ षोडश चाष्टधा ॥ २४१ ॥

1. C. 'भा' for 'पा'
2. C. 'सस' for 'स'
3. C. 'गघरागकः' for 'गघरागतः'
4. C. 'नि' for 'ति'
5. C. 'शशाङ्काधिकं' for 'गगाङ्कधिकं'
6. C. 'छायालगराग' for 'राग'

मात्रा संख्या रसाश्चास्य हास्यशृङ्गारवीरकाः ।
पञ्चसप्ताष्टमात्रासु यतिरत्र प्रचोदिता ॥ २४२ ॥
त्रिंशत्प्रकारभिन्नेन रूपकेन विधीयते ।

॥ इत्यौमापते गीतशास्त्रे रूपलक्षणं नाम त्रयोदशोऽध्यायः ॥

---

## ॥ अथ चतुर्दशोऽध्यायः ॥

[1](म)[त]दीयस्य स्वरूपं तु ततः परमिहोच्यते ।
हरिणा[2]पि प्रसंज्ञातं माधिकं तु ततः प्रियम् ॥ २४३ ॥
कैलासं कोमलं पथ्यसमाख्यं साधनं प्रिया ।
वारुणं सर्वतोज्योतिः सिंहध्वानं भयं श्रियम् ॥ २४४ ॥
रक्षणं वालनं व्योम वरदं कारणं प्रभुम् ।
मङ्गलं भद्रजाकौ च सर्वव्यापीं हयस्य यः ॥ २४५ ॥
कुशलः कु[3](ट)[ह?]रः कुम्भविरलव्यस्तविस्तकौ ।
पन्नगः पवनो भोगी नीलमेघश्शुको भृगुः ॥ २४६ ॥
निर्विकारः स्वयं भाव्यंशकः शुक्रः श्रुतिः कृतिः ।
तालजं शब्दकं वाद्यं स्वररतं लयं स्वयम् ॥ २४७ ॥
मुग्ध[श्च]निपुणं हैमं मौक्तिकण्डेकिजम्बुकम् ।
म(टि)[ठ्य]स्य पडिम(टि)[ठ्य]स्य तालभेदस्तु दृश्यते ॥ २४८
उ[द्]ग्राहान्तर्याभोगेषु दश(धाकौ)[पञ्चैको?]नभिन्नताम् ।
किवनारदसंवादे शिवेनोक्तो ह्ययं क्रमः ॥ २४९ ॥
सरिभ्यांमनिधाभिश्च उ[द्]ग्राहारम्भ इष्यते ।
शशाङ्कान्यर्कपर्यन्त[4]यदनमप्रकीर्तितम् ॥ २५० ॥

---

1. B. 'उभयस्य' for 'मदीयस्य'
2. B. 'पिप्रसंजातं' for 'पि प्रसंज्ञातं'
3. B. 'ड' for 'ट'
4. B. 'प' for 'य'

अत्र तावद्विशेषोऽस्ति नृत्ये मूर्तिकलाक्रमात् ।
उ[द् ]ग्रहान्तर्यभोगेषु(त्वर्ते)[त्वन्तः?]र्याद्विगुणं भवेत् ॥ २५१ ॥

अत्र शान्तं परित्यज्य व्यतिरिक्ता रसा मताः ।
म....येस्या विमूलेन त्रिंशत्ताभिष इष्यते ॥ २५२ ॥

अयमेव क्रमः कार्य पडिम(टिरा)[ट्यस्य][वा]अपि ।

॥ इत्यौमापते गीतशास्त्रे म(टि)[ठ्य]लक्षणं नामचतुर्दशोऽध्यायः ॥

---

## ॥ अथ पञ्चदशोऽध्यायः ॥

देवं देवी सुखासीनं कैलासे पर्यपृच्छत् ।
भगवन् कथ्यतामष्टचत्वारिंशद्ध्रुवाः क्रमात् ॥ २५३ ॥

ईश्वर उवाच—

शृणु देवि त्वया पृष्टं ध्रुवालक्षणमुत्तमम् ।
ध्रुवाविज्ञानमात्रेण फलमिष्टमवाप्नुयात् ॥ २५४ ॥

ध्रुवाः षोडश पाताले कम्बलाश्वतरेरिताः ।
कूर्मरूपं जलबिन्दुवायुभेदं विलम्बितम् ॥ २५५ ॥

रक्तकायं महाश्वेतं हेम वैरि सुभाषितम् ।
जयरूपं महाकालं पञ्चमं सोमभूषणम् ॥ २५६ ॥

रङ्गवक्त्रं जगन्नाथं गरलं षोडश ध्रुवाः ।
त्रयस्त्रिंशाक्षरारम्भन्यूनपञ्चाशदन्तिकम् ॥ २५७ ॥

कूर्मरूपादिवृद्धिः स्यात् स्वरनाम च कथ्यते ।
अयुतं मोहनं मध्यं जनमोहं च षड्जकम् ॥ २५८ ॥

अन्तश्चक्षुश्च सर्वज्ञ ऋषभोऽष्टस्वराः स्मृताः ।
शृङ्गारहास्यकरुणावीररौद्रभयानकाः ॥ २५९ ॥

क्रोधबीभत्समित्येते स्वराणां क्रमशो रसाः ।
इत्थं पाताललोकेषु विशेषः परिकीर्तितः ॥ २६० ॥
एकस्वरे त्वेकरसे ध्रुवे विद्धि क्रमात्मिके ।

॥ इत्यौमापते गीतशास्त्रे कूर्मरूपादि ध्रुवालक्षण नाम पञ्चदशोऽध्यायः ॥

---

## ॥ अथ षोडशोऽध्यायः ॥

ध्रुवः कौस्तुभलोकेशौ गिरीशो लोचनामयः[यौ] ।
लयरूपमहं शान्तं अखण्डमद्वयं द्वयम् ॥ २६१ ॥
अन्यत्र चेष्टितं भीमं सर्वनामं सुमन्दिरम् ।
स्वर्गे प्रवृत्ता इत्येता ध्रुवा षोडश तुम्बुरु ॥ २६२ ॥
षष्ट्यक्षरं समारभ्य पञ्चविवर्धिताः ।
स्वर्गलोके ध्रुवा मानं पञ्चपञ्चत्रिंशद्युतं मतम् ॥ २६३ ॥
गान्धारं सर्वदं कामनाशं—खगं तथम् ।
भूतेश्वरं जम्बुरूपं शुद्धं क्रौञ्चं सुवैश्यजम् ॥ २६४ ॥
रौद्रं हास्यरसं क्षात्रं विभवं षोडश स्वराः ।
क्रमाद्विद्धि ध्रुवायुक्ता रसा बीभत्सवार्जिताः ॥ २६५ ॥

॥ इत्यौमापते गीतशास्त्रे देवलोकध्रुवालक्षणं नाम षोडशोऽध्यायः ॥

---

## ॥ अथ सप्तदशोऽध्यायः ॥

अतः परं प्रवक्ष्यामि भूमिलोके ध्रुवाः क्रमात् ।
जयन्तश्शेखरोत्साहो निमलो मधुरस्तथा ॥ २६६ ॥
कुन्तलः कोलकश्चारुनन्दनश्चन्द्रशेखरः ।
कामदो विजयाख्यश्च कन्दर्पो जयमङ्गलः ॥ २६७ ॥
तिलको ललितश्चेति भवेत्षोडशधा ध्रुवाः ।
एकैकाक्षरवृद्धिः स्यात् ध्रुवे तु पदनिर्मिताः ॥ २६८ ॥

अष्टपादाश्च षट्पादा ध्रुवाः संपरिकीर्तिताः ।
उ[द्]ग्राहस्तु द्विपादः स्याद(न्तु)[न्त]री त्वेकपादिका ॥ २६९ ॥

आभोगस्तु द्विपादो वा पञ्चपादोऽथवा भवेत् ।
उ[द्]ग्राहपादयुगलं प्रोक्तं सप्तदशाक्षरम् ॥ २७० ॥

अन्तर्याः स्वरभेदश्च इति भेदश्च जायते ।
आभोगे षोडशकला ध्रुवेति[1] पदनिर्मिताः ॥ २७१ ॥

जयन्तनाम्नस्तु परं ध्रुवायां
ऋषिर्भवेन्नारदनामधेयः ।
ब्रा(ह्मणी)[ह्मी]णी च देवी फलमर्थसिद्धिः
शृङ्गारनामा रस इत्युदीरणम् ॥ २७२ ॥

जयन्तध्रुवायां मगौ मोनयुग्मं
स युग्मं च पादद्वये तुल्यमेतत् ।
दगौ गोनगौ गोरगौ गोमगौ स-
स्ससौ गोन्तरीचिह्नमेवं प्रणीतम् ॥ २७३ ॥

जयन्ताख्यध्रुवायां तु पार्वतीलोचनोभवेत् ।

॥ इति जयन्तध्रुवा ॥

शेखराख्यध्रुवायां तु परं ब्रह्म भवेदृषिः ।
गायत्री देवता तालः सिंहनादः फलं सुखम् ॥ २७४ ॥

शेखराख्यध्रुवायां तु भगौ गौञ्जनसाभगौ ॥ २७५ ॥

भगौगोजरसाभोगः शेखराख्यध्रुवान्तरी ।
आभोगे षोडशकला शेखराख्यस्य लक्षणम् ॥ २७६ ॥

॥ इति शेखरध्रुवा ॥

उत्साहाख्यध्रुवायां तु स्यादृषिर्भव उदाहृतः ।
देवता त्वं हि विरहो रसः (सप्तिः) [सूतिः] फलं भवेत् ॥ २७७ ॥

---

1. B. 'द्वि' for 'ति'

नजभातयजा गा..........प्त्युगमुत्साह उ[द्]ग्रहे ।
मजभातरसालोकस्ससनाल्लमास्सलः ॥ २७८ ॥
लघुश्च पादयुगलमुत्साहाख्यध्रुवान्तरी ।
उत्साहाख्यध्रुवाभोगमु[द्]ग्राहान्तरिलक्षणः ॥ २७९ ॥
उत्साहाख्यध्रुवा ताल उ[द्धट)[द्धट्ट]स्साष्टपादिका ।

॥ इत्युत्साहध्रुवा ॥

निर्मलाख्यध्रुवायां स्यात्कपिलो ऋषिरीरितः ॥ २८० ॥
हयलीलाफलं वस्त्रं लक्ष्मीर्देव्यद्भुतो रसः ।
नयसारसमालोगो निर्मलो ग्रहवत्पुरा ॥ २८१ ॥
निर्मलो ग्रहवत्पादो न्यासाः पञ्च(ग)णा इति ।
कथ्यन्ते निर्मलान्तर्योः नयनाजगमा(व)[घ ? ]गाः ॥ २८२ ॥
जगसा रगलानोनो ननौ पादाः परं ततः ।
उ[द्]ग्रहान्तारिमानं स्यादाभोगे निर्मला ध्रुवे ॥ २८३ ॥

॥ इति निर्मलध्रुवा ॥

माण्डव्योऽस्य ऋषिर्देवि मङ्गलाप्यद्भुतो रसः ।
एकतालं फलं श्रेष्ठं षट्पादे मधुरध्रुवे ॥ २८४ ॥
ममगातगगंमोगो मगगा मधुरादिवत् ।
मगामोगोगमौ मोमो मगणो मधुरान्यवत् ॥ २८५ ॥
मयजा गगया मोमो गान्तर्या मधुरध्रुवे ।
आदौ गवादो मधुर उद्ग्राहान्तरिलक्षणे ॥ २८६ ॥

॥ इति मधुरध्रुवा ॥

कुन्तलाख्यध्रुवे देवी कौमारी काश्यपो ऋषिः ।
भयानकः फलं लक्ष्मी रतिलीलश्च तालकः ॥ २८७ ॥
कुन्तलस्योद्ग्रहद्वन्द्वे तघजातमतारगाः ।
अन्तर्या कुन्तलस्सैव तयजातममानगौ ॥ २८८ ॥
लश्चा(भीग्रभूये)[भोग भुवो]मानमु[द्]ग्रा[हा]न्तरिलक्षणम् ।

। इति कुन्तलध्रुवा

कोमलाख्यध्रुवे देवी लक्ष्मीर्जह्नु ऋषिर्भवेत् ॥ २८९ ॥
....लश्च तालः स्यात् [फ]लमायूरसोद्भुतः ।
कोमलाख्यध्रुवे मेमा मोताररजमाल(ब)[ग]म् ॥ २९० ॥
उद्ग्रहौ चान्तरी तुल्यमाभोगत्रितयं तथा ।

॥ इति कोमलाख्यध्रुवा ॥

चारुध्रुवे ऋषी रुद्रस्तालश्च हरिनन्दनः ॥ २९१ ॥
रसो बीभत्स एव स्यात् फलं राज्यं त्वमीश्वरि ।
चारुग्रहद्वये मो मो गनजाननजालगौ ॥ २९२ ॥
चर्वन्तर्याम्तनौ नो गो नसलानमलानला ।
नतलागयथा पूर्वं आभोगत्रितयं भवेत् ॥ २९३ ॥
उ[द्]ग्रहान्तरि यावत्स्यात्तावदाभोगसंहतिः ।

॥ इति चारुध्रुवा ॥

नन्दनाख्यध्रुवे देवी मालिनी गौतमो ऋषिः ॥ २९४ ॥
तालःस्या[न्]नन्दनश्शान्तो रसश्च फलमुत्तमम् ।
नन्दनाख्यध्रुवे सौलो लताल[—]गमागमाः ॥ २९५ ॥
गुरुश्चाथ भमौ लौ(ण)[ज?] सजवाननमाललः ।
भनगयवन्तरी प्रोक्तमाभोगत्रितयं समम ॥ २९६ ॥

॥ इति नन्दनध्रुवा ॥

चन्द्रशेखरसंज्ञायां ऋषिः स्याच्चन्द्रशेखरः ।
देवी त्वं स्या रसो हास्यं कौञ्चतालः फलं सुखम ॥ २९७ ॥
चन्द्रशेखरसंज्ञायां नयभाजमनौ जभः ।
लौग्रही सननसा जलसा सजजालनः ॥ २९८ ॥
न(स)सा सानसजा प्रोक्तं अन्तर्याभोगवत्त्रयत् ।

॥ इति चन्द्रशेखरध्रुवा ॥

कामदाख्यध्रुवे देवी वैष्णवी रक्ष्यतालकः ॥ २९९ ॥

ऋषिर्वसिष्ठो हास्यं च शान्तश्च विजयः फलम् ।
कामदो[द]ग्रहयुग्मे तु ममभ(म)तिनगाश्चनः ॥ ३०० ॥
ततगाश्चान्तरी रोयो ननरा जरगास्सरः ।

॥ इति कामदध्रुवा ॥

विजयाख्यध्रुवे देवी वाराही नारदो ऋषिः ॥ ३०१ ॥
बीभत्सशान्तौ तालश्च सलीलास्संपदः फलम् ।
विजयो ग्रहयुग्मे सममनान सलारयः ॥ ३०२ ॥
अन्तरी च तथा प्रोक्तं स्वरभेदोऽत्र जायते ।

॥ इति विजयध्रुवा ॥

कन्दर्पाख्यध्रुवे देवी काली च हरितो ऋषिः ॥ ३०३ ॥
भयं हास्यं च तालं तु श्रीरङ्गः फलमुर्वराः ।
कन्दर्पो ग्रहयुग्मे तु न भरागनभानतः ॥ ३०४ ॥
कोन्तर्यातनभारोगो नभनातततातत: ।
लघुर्गुरुःस्यादाभोग[1](नि)[त्रितयं] पूर्ववत्स्मृतम् ॥ ३०५ ॥

॥ इति कन्दर्पध्रुवा ॥

जयमङ्गलदेवी स्याच्चामुण्डीतु शिवो ऋषिः ।
तालश्चश्चत्पुटश्शान्तो रसो रत्नं (रसो)[फलो] भवेत् ॥ ३०६ ॥
जयमङ्गलसंज्ञायां ननयातललासभः ।
न यभाप्रथमे पादे द्वितीये न समातनः ॥ ३०७ ॥
मोनयस्सलला प्रोक्तमेवमु[द्]ग्रहलक्षणम् ।
जायते त्वन्तरीयुग्मे नयमाभमनाय[2]रः ॥ ३०८ ॥
रजराम भराजारौ कोलो लततरालल: ।
नैय गागस्तथा भोगे तुल्यं पादचतुष्टयम् ॥ ३०९ ॥

॥ इति जयमङ्गलध्रुवा ॥

---

1. B. 'त्रि' for 'नि'
2. B. 'प' for 'य'

तिलकाख्यध्रुवे देवी रतिः कामऋषिर्भवेत् ।
शृङ्गाख्यं करुणाख्यं च तालि: कासिगमः फलम् ॥ ३१३ ॥
तिलकाख्यो ग्रहे पादाश्चत्वारो भिन्नवृत्तयः ।
न मगा सतजाल्लोसस्समनाल्गमूल्वत् ॥ ३१४ ॥
समभा भजनाभो स जसलाः प[द्]द्वितीयवत् ।
गनसा मजसा तो[1] तनभलाः पत्तृतीयवत् ॥ ३१५ ॥
नमरायन[2]भाभोभरजलाः पच्चतुर्थकः ।
नसता भगलाभोभ जमगागमनाल्मः ॥ ३१६ ॥
लघुर्द्वयमिति प्रोक्ता तिलकाख्यध्रुवान्तरी ।
उ[द्]ग्रहान्तरिमानं स्यादाभोगत्रितयं ततः ३१७ ॥

॥ इति तिलकध्रुवा ॥

ललिताख्यध्रुवे देवी काली स्यान्माण्डको ऋषिः ।
बीभत्सहास्यकरुणाः फलं श्रीः सिंहनन्दनः ॥ ३१८ ॥
ललितो ग्रहयुग्मेन भनराजयतावभः ।
जलगास्त्वथ मोनो स जमरा रमभारजः ॥ ३१९ ॥
सगणश्चान्तरी प्रोक्ता आभोगत्रितयं समम् ।

॥ इत्यौमापते गीतशास्त्रे ध्रुवालक्षणं नाम सप्तदशोऽध्यायः ॥

---

# ॥ अथाष्टादशोऽध्यायः ॥

देव्युवाच—

भगवन्भवता प्रोक्ताः शुभाः प्रीतिफला ध्रुवाः ॥ ३२० ॥

त्रिपदा लक्षणं ब्रुहि सर्वकामफलप्रदम् ।

ईश्वर उवाच—

त्रिपदं त्रिपुरं हंसं गौरीनन्दनकारणे ॥ ३२१ ॥

---

1. B. 'ती' for 'तो'
2. B. 'नय' for 'यन'

कामांगं सुमुखं चेति पर्वतं करणं भवेत् ।
त्रिपदा नवधा प्रोक्ता स्वरा वर्णाः पृथक् पृथक् ॥ ३२२ ॥
नवत्रिपदा तालो विरामान्तलघुत्रयम् ।
विलम्बत्रिपदा तालो जोम्बलः परिकीर्तितः ॥ ३२३ ॥
उ[द्]ग्रहाः स्युश्चतुर्मात्रास्साष्टमात्रान्तरीभवेत् ।
आभोगः स्याच्चतुर्मात्रः तत्तल्लक्षणमुच्यते ॥ ३२४ ॥
उद्ग्रहे त्रिपदा या स्यात् रलभागलराल्लः ।
भनान्तर्या द्वयं रोसरतारतजभारभः ॥ ३२५ ॥
जश्चेत्याभोगकेनोजनलरासज(हा) इत्यपि ।

॥ इति त्रिपदा ॥

उ[द्]ग्रहे त्रिपुरश(शै) [चै]व मलरालगजारसः ॥ ३२६ ॥
अन्तर्यां यसगालोन भनजाजनलालजः ।
भभलाः पुनराभोगे नभयागनतालगः ॥ ३२७ ॥
नतसा त्रिपुरं प्रोक्तं हंसलक्षणमुच्यते ।

॥ इति त्रिपुरम् ॥

हंसे तनरसा नोरगौ ग इत्यु[द्]ग्रहे भवेत् ॥ ३२८ ॥
अन्तर्यां मयभायोगगतलालभलालभः ।
समसा रलनानोन यगणश्चैवमन्तरी ॥ ३२९ ॥
आभोगे सनजाभोभनभलालः प्रकीर्तितः ।

॥ इति हंसः ॥

गौरीनन्दनगीते स्युः सस नाभनगाः पुनः ॥ ३३० ॥
अन्तर्याञ्जनजानोभसनाः पंचसलाल्नः ।
नगृजाजभगारोस जजानोगोन्तरिर्भवेत् ॥ ३३१ ॥
आभोगो रसयाभोयगलपूगौरिनन्दनः ।

॥ इति गौरिनन्दनः ॥

उ[द्]ग्रहे कारणाख्यस्य ससरा मसगुम्मभी[1] ॥ ३३२ ॥

लश्चान्तर्यां रसौ जौ गरललानगणो रसः ।
लघुर्गुरुः स्यादाभोगे ससनाभभनाश्च षट् ॥ ३३३ ॥

ललसा जजभा रोस जसलामन पापकाः ।
लघुद्वयमिति प्रोक्तं कारणं विजयप्रदम् ॥ ३३४ ॥

॥ इति कारणम् ॥

कामाङ्गगीते भनराज भनाभो ग्रहो भवेत् ।
अन्तर्यां यरभा योजमभनालतरा गुरुः ॥ ३३५ ॥

आभोगे हयजालोयसभकामांगमीरितम् ।

॥ इति कामाङ्गम् ॥

सुमुखी त्रिपदा गीतध्रुवलक्षणमुच्यते ॥ ३३६ ॥

ममगा जतगारोजगभयालो ग्रहद्वये ।
अन्तर्यां मम भारोभलरना ससनातच ॥ ३३७ ॥

आभोगे तरमा[2]सोल तरमाजगलासज ।
जमना सलगुश्चैवं सुमुखं राज्यलाभदम् ॥ ३३८ ॥

॥ इति सुमुखम् ॥

पर्वतत्रिपदा गीते भनभानभराजलः ।
अन्तर्याम्भजसालोय तननामजलाभनः ॥ ३३९ ॥

ननलाः पुनराभोगे भनतालय सा भज ।

॥ इति पर्वतः ॥

करुणे य[3]रमामोघ गुरुश्चातान्तरीं समः ॥ ३४० ॥

---

1. मभी = मगणभगणवान्
2. B. 'गा' for 'मा'
3. B. 'ज' for 'य'

मतमाननगायोरगुरुश्चाभोगके चरः ।
ररजाभक्रमात्प्रोक्तं करुणं व्याधिनाशनम् ॥ ३४१ ॥
नवसूत्रिपदाख्येषु रसःस्वेष्टो विधीयते ।

॥ इति औमापते गीतशास्त्रे त्रिपदालक्षणं नाम अष्टादशोऽध्यायः ॥

---

## ॥ अथ एकोनविंशोऽध्यायः ॥

अड्डुताली वितालश्च सुभगं सोमभूषणम् ॥ ३४२ ॥
सुल्लामं करालश्च बुभुकं चेति सप्तधा ।
अड्डुताल्यान्तमौ व्योम यो ग्रहे तान्तरी भवेत् ॥ ३४३ ॥
मास्सप्त रलगा पश्चात् र[1]भभाग [2]ममाय च ।
अड्डुताली विताले सौ लगौ सौ ज्ञमनरान्तरी ॥ ३४४ ॥
तोयसः भौनभौ स[3]क्तभागोरलघुरित्यन्तरिर्भवेत् ।
आभोगे नतरासौभ वितालं विजयप्रदम् ॥ ३४५ ॥

॥ इत्यड्डुतालीवितालौ ॥

सुभगे यनतालोज भल्लावुद्ग्रहे पुनः ।
अन्तर्यान्नौतनतजास्तनजा ननसालल: ॥ ३४६ ॥
आभोगो नतनानोजजयलालः क्रमात्सुखम् ।

॥ इति सुभगम् ॥

सोमभूषणगीते स्यात् भजजालरनाभगौ ॥ ३४७ ॥
अन्तर्यान्तरसानोस भतलागोऽथ कथ्यते ।
आभोगे सभनालोन जनगागः फलं सुखम् ॥ ३४८ ॥

॥ इति सोमभूषणम् ॥

---

1. B. 'मभा' for 'भभा'
2. B. 'र' for 'म'
3. B. 'ल' for 'क'

सुलला(भि)[मे]गगौ तोभतजगावदुद्ग्रहेन्तरी ।
लभयासररानोसयनराः पुनरन्तिमे ॥ ३४९ ॥
रनजाससभाः प्रोक्तं सुललामं जयप्रदम् ।
॥ इति सुललामम् ॥

कराले भचतुष्कं च सोलकोद्ग्रह अन्तरी ॥ ३५० ॥
रजलातजलाभोनजयनासल पश्चिमे ।
नौत[1]लास सजालश्च कराल शत्रुनाशनम् ॥ ३५१ ॥
॥ इति करालम् ॥

बुभुक्के नयनालोभ ननलालस्तथोद्ग्रहे ।
अन्तर्यां भजसाभोगनसनानलभा भसः ॥ ३५२ ॥
आभोग उद्ग्रहसमः प्रोक्तं बुभुकवर्धनम् ।
॥ इति बुभुक्कम् ॥

उर्व्यालोलावड्डुताल्यां स्वर्गे त्वाभिर्लबुर्भवेत् ॥ ३५३ ॥
॥ इति सप्तविधा अड्डुताली ॥

॥ इत्यौमापते गीतशास्त्रे अड्डुतालीलक्षणं नाम एकोनविंशोऽध्यायः ॥

---

## ॥ अथ विंशोऽध्यायः ॥

एकताल्युद्ग्रहाभोगौ चतुर्मात्रौ प्रकीर्तितौ ।
अन्तरी स्यादष्टमात्रा बहुभेदैकतालिका ॥ ३५४ ॥
एकमात्रैकताली स्यात्स्वेष्टारसगणास्त्विह ।
ध्रुवताले लगौ सोऽयं लम्बु स्याद्गीतमानग[2]भ् ॥ ३५५ ॥
अड्डुताल्यां सरिगमप(त)[धा]नीवर्तना भवेत् ।
रत्याताले सरिगमंप(त)[ध? ]नी करुणं भवेत् ॥ ३५६ ॥

---

1. B. 'नोकला' for 'नौतला'
2. B. 'य' for 'ग'

अविरोधं च कर[1]णं वर्तनं च सुखप्रदम् ।
एवं क्रमाद्गीतजातं ऊहनीयं महेश्व(री)[रि] ॥ ३५७ ॥

एतेभ्यो गीतजातानि बहुसंख्यानि जज्ञिरे ।
मयूरवृषभौ मेषः सिंहकोकिलवाजिनः ॥ ३५८ ॥

गजश्चेति स्वराःप्रोक्ताः तत्तन्मैत्रीसुखप्रदाः ।

**॥ इत्यौमापते गीतशास्त्रे सूडादिगीतलक्षणं नाम विंशोऽध्यायः ॥**

---

## ॥ अथ एकविंशोऽध्यायः ॥

देवी—

भगवन् श्रोतुमिच्छामि वेणुवीणादिलक्षणम् ॥ ३५९ ॥

ईश्वरः—

सजीवश्चैव मिश्रश्च निर्जीव इति च त्रिधा ।
रागो भवति तत्रादौ सजीवो नरकण्ठजः ॥ ३६० ॥

मिश्रः स्याद्वेणुसंजातो निर्जीवो वैणिको भवेत् ।
मूलशक्त्या (द्रु)[रु]ता प्रोक्ता वेणुर्देशकृताह्वया ॥ ३६१ ॥

शिरस्येकाङ्गुलं त्यक्त्वा मुखद्वारं विधीयते ।
मुखद्वारादधस्ताच्च चतुष्षष्ट्यङ्गुला (परम्) [वधि] ॥ ३६२

अष्टरन्ध्राणि वेणौ स्युः चतुष्षष्ट्यङ्गुलान्तरे ।
यवमानमधस्त्याज्यं सर्वरन्ध्रविधिस्त्वयम्[2] ॥ ३६३ ॥

देशः षष्ट्यङ्गुलो ज्ञेयः घृ[3]तो न्यू[द्व्यू]नशतार्धकः ।
कृष्णस्य वंशः षड्त्रिंशो मोह इत्यभिधीयते ॥ ३६४ ॥

---

1. B. 'र' for 'र'
2. B. This line is omitted.
3. B. 'द्रु' for घृ.

त्रिंशदङ्गुल्को वंशः (कृष्णस्य) [कुष्टस्य] स्यान्महोदरः ।
चतुर्विंशाङ्गुलो मुक्तो वैरिकोऽष्टादशाङ्गुलः ॥ ३६५ ॥
इति सप्तविधाः प्रोक्ताः यथावद्देवि वेणवः ।
मनुष्यवेणवस्त्वष्टौ कथ्यन्ते गिरिकन्यके ॥ ३६६ ॥
मुखरन्ध्रान्तरोरन्ध्रात् मध्यनामा विधीयते ।
नवा दहाग्यारहा (वरा)[बार]हा तेरहा तथा ॥ ३६७ ॥
स्याच्चौदहापान्ध्रः षोढहा नरवेणवः ॥
वेणुरन्ध्रेषु नवसु स्फुटाः सामस्वरास्सदा ॥ ३६८ ॥
आरोहश्चावरोहश्च क्रमाद्विक्रमतः स्वराः ।
अष्टरन्ध्राणि चाक्रम्य वादनं फुंकमुद्धरेत् ॥ ३६९ ॥
अष्टरन्ध्रेष्वङ्गुलीभिर्मुक्तामुक्तेषु हेलुणा ।
अङ्गुलीभिर्द्रुतं मुग्धे मुक्तिरन्ध्राष्टकेक्षणात् ॥ ३७० ॥
भवेद्बहुलिका नाम नद्य[1]स्यात्तविलम्बनः ।
मौषी[2]स्यात् क्रमभङ्गेन मुर्छा पुर्णस्वरक्रमात् ॥ ३७१ ॥
गत्या स्वराणां छाये[3] स्यात् अनुजाये निवृत्तिकः ।
(ष)[4][व]हनीप्रमुखा मार्गाः शोभना वेणुवादने ॥ ३७२ ॥
वेणुदानात्पुण्यवृद्धिः आयुःश्रीजयकीर्तयः ।

॥ **इत्यौमापते गीतशास्त्रे वेणुलक्षणं नाम एकविंशोऽध्यायः**

---

## ॥ अथ द्वाविंशोऽध्यायः ॥

अथ वीणां प्रवक्ष्यामि शृणुष्वायतलोचने ॥ ३७३ ॥
करण्डकाकृतिर्दण्डो निम्नोन्नतविवर्जितः ।
पञ्चमुष्टिश्च षण्मुष्टिः त्रिपुरी सप्तमुष्टिका ॥ ३७४ ॥

---

1. B. 'य' for 'द्य'
2. B. 'मी' for 'षी'
3. B. 'जाये' for 'छाये'
4. B. 'प' for 'ष'

अष्टमुष्टयधिका वीणा प्रौढी स्यादाचतुर्दश ।
दरी पञ्चदशारम्भं यावदष्टादशाङ्गुलम् ॥ ३७५ ॥

खदिरो राजवृक्षश्च वीणा स्याद्रक्तचन्दनः ।
करभे चाम्रपनसौ सुन्दरी च तथा भवेत् ॥ ३७६ ॥

एणशृङ्गा[द्]दन्तिदन्ताद्वैशिका नवकल्पना ।
सुवर्णकांस्यरजतैः छत्रं च कटकं तथा ॥ ३७७ ॥

एकतन्त्री तु भारी स्यात् प्रौढी स्याद्वित्रितन्त्रिका ।
अनाविधा ब्रह्मवीणा चतुः पंचादितन्त्रिका ॥ ३७८ ॥

दण्डं जीवस्वरूपः स्यात् करभः (कु)[क?]र्मं एव च ।
नाभिर्ब्रह्मा वैशिके तु सरस्वत्यमिधीयते ॥ ३७९ ॥

सरस्वत्यासनं पद्मं अलाबुरिति कथ्यते ।
तन्त्री स्याद्वासुकिश्चैव जीवा शाक्तिः परं भवेत् ॥ ३८० ॥

दक्षिणाऽनामिका मध्ये वामे मध्यादिवार्जिता ।
अङ्गुल्या पञ्चवक्त्राणि मम देवि महेश्वरि ॥ ३८१ ॥

वीणावादनमायुष्यं श्रीकरं मोक्षदं तथा ।
नादो गीतावसानस्तु वहिः स्यात्स्वरमण्डले ॥ ३८२ ॥

ग्रामजातिस्वराश्चैव श्रुतयो मुर्च्छनास्तथा ।
ताना रागाश्च ते सर्वे जायन्ते स्वरमण्मडले ॥ ३८३ ॥

स्वरमण्डलमाख्यातं सप्तत्रिंशद्युतं शतम् ।
ध्रुवा मण्डलमाख्यातं चतुः षष्टिप्रमाणकम् ॥ ३८४ ॥

तानमण्डलमाख्यातमूनपंचाशदेव च ।
द्वात्रिंशन्मण्डले[स्वा?]रौ श्रौतं द्वाविंशतिर्भवेत् ॥ ३८५ ॥

त्रिसप्तमूर्च्छनाबिम्बं चान्द्रिकं पोडशोदितम् ।
वारुणेन्द्रं द्वादशैव विपंची नवधा भवेत् ॥ ३८६ ॥

सप्तभिः परिवादिन्यां वीणाभेदाश्शतं शतम् ।
अष्टादशाङ्गुला प्रोक्ता वीणा स्यात्परिवादिनी ॥ ३८७ ॥

विपंचिका त्रिशाखाभिः कथिता परिवादिनी ।
ऊनविंशाङ्गुलं दीर्घा विपंची पंचविस्तृता ॥ ३८८ ॥

द्वाविंशत्यङ्गुलायामा वारणा सप्तविस्तृता ।
चान्द्रिका दशविस्तीर्णा वारुणेन्द्रवदायता ॥ ३८९ ॥

मूर्च्छनां श्रुतिमेरूणां दीर्घं षट्त्रिंशदङ्गुलम् ।
अष्टादशाङ्गुलास्तेषां विस्तारः परिकीर्तितः ॥ ३९० ॥

चत्वारिंशाङ्गुलायामं चतुर्विंशतिविस्तृतम् ।
तानमण्डलमाख्यातं तथैव ध्रुवमण्डलम् ॥ ३९१ ॥

आयतं षष्टिरङ्गुल्यः षट्त्रिंशद्विस्तृतं तथा ।
स्वरमण्डलमाख्यातं देवीदमवधारय ॥ ३९२ ॥

तन्त्रीसंख्यककीलाः स्युः देवो वीणा महेश्वरी ।

**। इति औमापते गीतशास्त्रे वीणालक्षणं नाम द्वाविंशोऽध्यायः ॥**

---

## ॥ अथ त्रयोविंशोऽध्यायः ॥

देवी—

तालानां तत्त्वतो भेदान् ज्ञातुमिच्छामि शङ्कर ॥ ३९३ ॥

ईश्वरः—

असंख्याकास्तु तालानां भेदाः सङ्कोचतः शृणु ।
गीतप्रबन्धसंजाताः ताळा एकशतं मताः ॥ ३९४ ॥

तद्वच्छब्दप्रबन्धे स्यादादिमेरौ तु दृश्यताम् ।
तालशब्दस्य वक्ष्यामि देवि निर्वहणं शृणु ॥ ३९५ ॥

स्वस्मिन्नेव वरारोहे नाम्नि तालो विलीयते ।
तस्मादेतद्रहस्यं तु न ज्ञातं देवमानुषैः ॥ ३९६ ॥

देहाक्षरं समारभ्य सप्तविंशमथाक्षरम् ।
येनाक्षरेण संमिश्रं संयुक्तं तत्तु कथ्यते ॥ ३९७ ॥

ह्रस्वं तद्द्विगुणं देवि दीर्घं तद्वीप्सितं भवेत् ।
मनागनुस्वराः प्रोक्ताः अनुस्वाराश्च पार्वति ॥ ३९८ ॥

एतस्य नाम विज्ञेयं त्रिमात्रेति प्रकीर्तितम् ।
मया विना त्वया चैतत् नैव जानाति कश्चन ॥ ३९९ ॥

संयोगादि द्रुतं वर्णं ह्रस्वदीर्घं लघुर्गुरुः ।
प्लुतभेदादिसंज्ञायामनुस्वारमनुस्वराः ॥ ४०० ॥

[देव्युवाच—]

गीतप्रबन्धताळानां श्रोतुं कौतुकमस्ति मे ।

ईश्वर उवाच—

मातृक्यां गददलाः । (तं) [नं ?] दे(व)[प ?]लौ । आर्यागल । कलहंसे लोपौ । चक्रवाळे गदौ गपः । चतुष्पद्यां लगलौ । वृत्ते दौप । हयलीलायां दौ गलः । गेघ्न्यां पलौ । (रि)[वि]जये लो[1]पः । ताळार्णवे ग(व)[प]लपः । वस्तुताळे गलौ । षट्पद्यां गलला: । गद्ये गपः । हरिपूर्वके लौगलपौ । ध्वनिविलासे लयत्रिगौ ॥ पंचताले पलगपः । स्वरांके लपौ । अंकध्वनौ पगलाः । दण्डके पलल पः । शरभलीलायां लत्रिगलः ॥ आमण्डने गपलपः । नन्दने पलपः । द्विपदे लो[1]पः । क्रौंचपदे दौपलौ । वत्सलीलायां गलाः हयमालापध्वनौ लौगत्रिलौ । हंसपदे दपलौप । द्राविणे दोलत्रि । दे[ङ्कु]क्यां पला । च(र्च्चायां)[2] [चर्या] गलौ । जये लपौ । श्रील........ । बौ[3]दौ गपलाः । कैंवाटे गौप । सिंहपदे पलौप । द्विनेमे लगलाः । वर्धन्यांगलौ । जयश्रियां गदौ ल । वर्धमाने गल्गपाः । रथ्यपादे गलौपः । चित्रे गदौपः । दाहटे गलपः । पंचभंगे पलपौ । ललिता लत्रिः । श्रीनन्दे दौगपौ । श्रीखण्डे नेदौ गपलपः । करणाख्ये लौगपः । गळबन्धे लोपौ । वाटे गपः । पदकाने लौगपौ । मिश्रके ददौ च । चित्रके यदौ पः । स्वरमे लौपः । पाटमे

1. B. 'लौ' for 'लो'

2. B. 'चर्य्यार्य' for 'चर्च्चायां'

3. B. 'औ' for 'बौ'

गलप: । अंकवारिण्यां पलगलौ । त्रिपद्यां दौ[1]लौ । हंसलीलायां पैलगल । अंकवारिण्यां पलगलौ[2]लत्रि[3]धवळे लोप । त्रिभंग्यां दौपल । रणरंगे लौपौ[4] । सिंहविक्रान्तके पलग दौपलप[5] । स्वरपूर्वके लौगव:[6] । शुभेलप चंचुपाते पलगप:[7] । आभिनन्दे लौप[8] । श्रीविलासांकिते दौगल गपलप:[9] । श्रीरंगवर्धने दौगे पलगलप:[10] । शुकशारिकायां लौगलौ । संधाने पगप: । आकदम्बिन्यां गलपलौ[11] । उन्मत्तरागे पगलगप[12] । रागकदम्बाख्ये गलौ पगप[13] । मनोरमे लगलप । चतुर्मुखे लपलप: । चतुरंगे लौपौ[14] । रथ्येग लम्बौ सगण: । अद्भुताळे यकदौलौ । रूपके गलौ ममे[15] । पटिमरे गौग[16] । एकताळे लस्वर । प्रबन्धाख्ये ललगदे पगप[17] । अनेकताळे लग लगप: । स्तवमंजर्यां लौपलौ । सिंहलीलायां पलगल । विस्र[18]स्वरार्धे गदौलगप । शुद्धस्वरार्धे लगोलप[19] ।

1. C. ललौ fot 'लौ'
2. C. 'दोलहरौ गलपा' for अंकवारिण्यां पलगलौ
3. C. 'चरिते लत्रयं' for लत्रि
4. C. 'पललपा:' for 'लौपौ'
5. C. 'ला:' for 'लप'
6. C. 'लौपौ' for 'लौगव:'
7. C. 'दलौगपौ' for पलागप:
8. C. 'लोपलौ' for लौप'
9. C. 'दौलौगललपा:' 'दौगलगपलप:'
10. C. 'लपलगलपा:' for 'गेपलगलप:'
11. C. 'लपलपा' for 'गलपलौ'
12. C. 'पगलगला:' for 'पगलगप'
13. C. 'लपगपा:' for 'गलौपगप'
14. C. 'लोपौ' for लौपौ
15. C. 'नलौमगम' for 'गलौममे'
16. C. 'मांगौमगौ' for 'मरेगौग'
17. C. 'गददपगपा:' for 'ललगदेपगप'
18. C. 'मिश्र' for 'विस्र'
19. C. 'गललगपा : for 'लगोलप'

दाहडेयें गलौ क्रमजे दौ लप । द्विगुणे लौप[1] । प्रमोदे दौ गप । स्वरसंदोहे लौपगप । प्रतापमंगले । दौगलपल[2] । जयमङ्गलाचारे लौपलगौप ।

सममात्रेषु तालेषु द्विक्रमा शुभ[3]लौ गपौ ॥ ४०१ ॥

॥ इत्यौमापते गीतशास्त्रे मातृकादिप्रबन्(धो) [धताळो] नाम त्रयोविंशोऽध्यायः ॥

## ॥ अथ चतुर्विंशोऽध्यायः ॥

देव्युवाच—

किमेतेभ्यः प्रसूतास्ते तालाश्च(श्च)[च]त्पुटादयः ।

ईश्वरः—

सद्योजातान्मातृकाख्याः क्रौञ्चोऽभूद्वामदेवतः ॥ ४०२ ॥

पुरुषात्करणाख्यश्च ई(श्वरा)[शाना]त्छ्रीरङ्गवर्धनः ।

आदिरथ्यस्त्वघोराख्यादुक्तास्तालास्तु जज्ञिरे ॥ ४०३ ॥

एतेभ्यः पञ्चलक्षाणि देवि तालास्तु जज्ञिरे ।

तालस्यानन्तरं गीते वाद्ये चाव्यक्त[4]तोऽभवत् ॥ ४०४ ॥

(तु)[त्रु]टिद्रुलगपाकाकुरिति तालास्तु षड्विधाः ।

त्रसरेणुमुखस्तालः (कात)[करता]लेन [5]मीयते ॥ ४०५ ॥

सर्षपाकारिणीं भुक्तां जित्वोच्छिष्टगतां पुनः ।

सूचीमुखे संघटय्य घाते नादंकराविधेत् ॥ ४०६ ॥

पद्मिनीपत्रसंहत्यां सूक्ष्मसूच्यभिवेधने ।

पत्रे पत्रे च यः कालस्तस्य कालस्समुच्यते ॥ ४०७ ॥

---

1. C. 'लोपः' for 'लौप'
2. C. 'पलधाः' for 'पल'
3. C. 'द' for 'भ'
4. B. 'न्यत्त' for 'व्यक्त'
5. B. 'ताळेनलिख' for 'कातलेन'

दशकाकणिकाताले कालः कण्डूयतो भवे ।
निष्कद्वयकिते ताले स्यादोमामलता कृतौ ॥ ४०८ ॥

चतुर्विंशतिरोकारो विनाडी परिकथ्यते ।
षष्टिर्विनाड्यो नाडी स्याद्धटिकादिर्युगान्तिकः ॥ ४०९ ॥

उभावुच्छ्वासनिश्वासौ प्रणवौ द्वौ प्रकीर्त्तितौ ।
मयूराण्डार्धरूपेण पलाष्टकमितेन च ॥ ४१० ॥

तालद्वयेन संजातो नादः स्यात्पापनाशनः ।
द्रुतं च यस्(या)[मा] दोकारास्तालानान्दलगप्लुता(न्)[त्] ॥ ४११ ॥

मातृकादिप्रबन्धाच्च संजातारशब्दतालकाः ।
चच्चत्पुटादयो देवि प्रसिद्धास्ते ततः क्रमात् ॥ ४१२ ॥

चच्चत्पुटे गगलपाः । त्रिभीणायान्दागलाः । मकरन्दे ललौपौ । मल्लिकामोदे गलगाल । चच्चर्यांगलौ । गङ्गारमणे पगलौप । त्रिभंग्यान्दौ पलौ । सम(रा)[1] [कङ्का] लेलौगपौ । नन्दने पलप । मातृके गदौपौ । हरिताले लौपौ जयमङ्गले लौपलपौ । विषमकंकाले लौलपगपौ । मुकुन्दे लपौ । जये लप । करणे लौप । चाचपुटे गलौ(प)[ग] । वसन्ते लपौ । अभिनन्दे लौपौ । पार्वतीलोचने गलौ गपौ । रतिकङ्कालिकायां लौपगलौ । नादिमाध्विकायां पलगलौ । मतंगे लपौ । षट्पितापुत्रिके गलगौ दौप । प्रतिनिस्साले दौल[2] गौंप । तुरंगलोलायां लपलगलौ । विजये लौप । तुरङ्गप्रदीपे पगदौगप । विलोकिते लगलप । आनन्दे गपौ । अक्षिपे[3]टे गलौप । सम्पद्वेष्टके पगौलप । कन्तुके पलप । त्रितये दौलप । पांजुलयां पलौ । राज(स)[झ] म्पायां गग[4]लपल । ललिते लौप । श्रीनन्दे दौलपौ । श्रीखण्डने दौलपलप । रङ्गे पौ । कीर्तिचतुर्मुखे गलौ पलप । प्रथमवति लग । तद्वर्णे गौपौ ।

---

1. B. 'ग' for 'रा'
2. C. 'लल' for 'ल'
3. C. 'पु' for 'पे'
4. C. 'ग' for 'गग'

नवो[1]त्संवे पर[2]गलप। रङ्गोद्योतिकायां पौगौलौ। सिंहलीलायां ललगल[3]। विजये लौगलौ। श्रीकीर्त्यां दौलगल। सत्ताले गौप। तुङ्गाङ्गारकि पौगपौ ससौलपौ। राजनारायणे लगलौप। अङ्गाक्षे पगप। शेखरे गलप। शरभलीलायां पौगलौ। सिंहविक्रीडिते पलगदौलौप। शीलाकर्ण्णने गौपलप। विद्रुमादौ गंदौ गल। गजलीलायां लौगल। आकन्दचूडामणौ गपलगौ। कोकिलपांसुलीलायां गलौ पलगलौ। रतिलीलायां पलगलपौ। तालांके गौपौ। चग(त्स)[झ]म्पायां लौपल। जूत्से गल। प्रथमे लोप। क्रीडक्ष्यां दोलगल। विद्याधरीताले गौलौगप। एकताले गलगप। जसके लौप। प्रत्यंगे दौलपौ। विद्वेक्षणे गौलपः। उद्धट्टे गौग। मध्यान्तं सिंहनादः। जगणान्तं जयानन्तं। जगणानन्तरं गुरुत्रयं रा[ज]विद्याधरं। द्रुतमिश्रबिन्दुतालं। आसरमालिकागलौ गलौ। लक्ष्मीशे गौप। भूतिलकि तालविध्वंसे गलगपौ वा। भूषणे गौलप। इत्येकोत्तरशतम्॥

एकस्थाने गवा चैव क्रमाद्द्वित्रिषु लिख्यते।
दलावेकार्धमात्रे(वा[4]सु)[षु] दशस्थानं च कथ्यते॥ ४१३॥

दशभेदन्दलगपा ग स्थानं शतभेदनम्।
पस्थानन(दे)[द्वे]सहस्र च अयुतं च महेश्वरि॥ ४१४॥

दुर्घटं तालसंख्यानां कोटिकोटिविजृम्भणम्।
प्लुतंगलभेन्यश्च गुरोर्लद यथाक्रमम्॥ ४१५॥

सहस्रशतसंख्यानां दलादीर्घं प्लुतं भवेत्।

**इत्यौमापते गीतशास्त्रे चच्चत्पुटादिशब्दतालमेकोत्तरशतप्रस्तारलक्षणं चतुर्विंशोऽध्यायः॥**

## ॥ अथ पञ्चविंशोऽध्यायः ॥

शृणु देवि प्रवक्ष्यामि मेरुप्रस्तारमद्भुतम् ॥ ४१६ ॥

द्रुतादिर्विंशतिकलां वर्धयेदेकशः क्रमात् ।
ततश्चतुश्चतुर्मात्राः क्रमादाषष्टि वर्धयेत् ॥ ४१७ ॥

पंच पंच कलाः पश्चादानवत्यभिवर्धयेत् ।
ततः कलानां दशकं वर्धयेदीरिताः शतम् ॥ ४१८ ॥

शतं त्रयोदशयुतं ततः षष्टिश्च पञ्चभिः ।
मातृकादिषु मात्रायां षट्शताष्टादशाधिकम् ॥ ४१९ ॥

शुद्धसालग सुन्धा[सूडा ?]श्च पञ्चाशत्परमेश्वरि ।
अष्टषष्ट्यधिका मात्राः आधारशतकं क्रमात् ॥ ४२० ॥

शब्दतालादिमात्रासु द्वादशाधिकऋक्शतम् ।
दुर्घटं पञ्चतालस्य षष्टिर्नव कला भवेत् ॥ ४२१ ॥

प्रथमे मेरुकोष्ठान्ते द्रुतं लघुरनन्तरम् ।
तृतीये गुरुमालिख्य चतुर्थे प्लुतमिष्यते ॥ ४२२ ॥

पञ्चमे मातृके षष्ठे चतुष्पदिरुदाहृतः ।
सप्तमे शरभा लीला स्वरांगाद्यष्टमे मतम् ॥ ४२३ ॥

नवमे कलहंसं च दशमे च हयध्वनिः ।
रुद्रेति वर्धमानादि अर्के कीर्ति चतुर्मुखम् ॥ ४२४ ॥

श्रीरंगस्तु त्रयोदश्यां सिंहविक्रान्तचतुर्दशी ।
वृत्तं तालार्णवश्चैव पक्षे स्यात्षोडशे पुनः ॥ ४२५ ॥

कन्दा च कलहंसश्च सार्यातालत्रयं विदुः ।
चक्रवालकवस्तुभ्यां हयलीलेति कथ्यते ॥ ४२६ ॥

कोष्ठे सप्तदशे द्वीपे गोन्या[1] विजयचर्चरी ।
भयोदीचा[2] अतिद्रुत्यां गद्यं च हरिपूर्वकम् ॥ ४२७ ॥

त्रिभंग्यां च पुनर्विंशे द्विपादः शरभध्वनिः ।
चञ्चत्पुटश्च विजयो ललितावर्धमानकः ॥ ४२८ ॥

एकविंशतिकोष्ठे च द्वाविंशे तु पुनर्लिखेत् ।
कैवाटं दाहदं श्रीखण्डनं गद्यपदानुकम् ॥ ४२९ ॥

गळबन्धकसंयुक्तं करणाख्यं च पाटवत् ।
रतिकङ्काणिका चैव त्रयोविंशतिकोष्ठका ॥ ४३० ॥

वदकानकनादा[3]ख्यं षट्पितापुत्रि दोल्हरी ।
चतुर्विंशतिकोष्ठे तु पञ्चविंशे ततः परम् ॥ ४३१ ॥

वृत्तकं चित्रकं चैव पादकं च मतङ्गकम् ।
अङ्कवारिणि संमिश्रं षड्विंशति ततः परम् ॥ ४३२ ॥

त्रिपादी रणरंगाख्यं प्रतिनिस्सालकं ततः ।
तुंगप्रदीपक्रमजौ सप्तविंशे ततः परम् ॥ ४३३ ॥

शिलाकर्णसलीलाभ्यां दण्डकं नन्दमण्डनम् ।
ढेंकिहंस पदं चैव अष्टाविंशत्पुनर्लिखेत् ॥ ४३४ ॥

आश्रित्या[4]न्यार्थषड्विंशत् प्रवणैकादश ध्रुवम् ।
त्रिपदा(त्स)[ज्झ?]म्पया रुद्रा ध्रुवा वारिधिसंमिता ॥ ४३५ ॥

द्विपञ्चाशन्मिता मात्रा पुनरेकोनविंशके ।
ईश्वराद्यर्थ[5]युग्मेन षट्पञ्चाशन्मनालिखेत् ॥ ४३६ ॥

---

1. C. 'गोण्डा' for 'गोन्या'
2. C. 'हयोदीपा' for 'भयोदीचा'
3. C. 'नन्दा' for 'नादा'
4. This verse has been supplied from 'C.
5. 'C र्ध' for 'र्थ'

अम्भोधाधारमित्यर्थ युग्मे षट् च शताद्धकम् ।
मङ्गलं च चतुर्मात्रा विंशकोष्ठेषु षष्टिकः ॥ ४३७ ॥
जयहंसपदं चैवं द्विनेमं वर्धनी त्वधः ।
जयश्रीपञ्चभङ्गं च श्रीनन्दं चर्यया शतम् ॥ ४३८ ॥
सिंहविक्रान्तकं चैव विलिखेदेकविंशके ।
स्वप्नपूर्वं शुभं मन्दं श्रीविलासाङ्कितं श्रुतिः ॥ ४३९ ॥
कदम्बिनी च सोन्मत्ता कदम्बाख्यमनोरमम् ।
लिखेद्द्वाविंशके कोष्ठे त्रयोविंशे तु कथ्यते ॥ ४४० ॥
चतुर्मुखं चातुरङ्गं लम्बमठ्यद्वयं च तत् ।
स्वरप्रबन्धानेका च सिंहलीला तु मञ्जरी ॥ ४४१ ॥
शुद्धस्वरार्धश्चैतेषां कलास्सप्ततिपञ्चकम् ।
ताविधा द्विगुणं पादक्रमौ तद्विपटिस्तथा ॥ ४४२ ॥
सहजो विक्रमश्चैव स्वरसन्दोहमोटितः ।
प्रतापजयमङ्गल्यौ त्रिभी[1]णा मकरन्दकः ॥ ४४३ ॥
मल्लिकामोदचच्चर्यौ गङ्गाभर्ता त्रिभंग्यपि ।
समरालं नन्दनं च मातृकं हरितालकम् ॥ ४४४ ॥
जयमङ्गलसंयुक्तो विषमकङ्कालकन्दकः ।
जयश्च पञ्चविंशाख्ये कला साशीतिपञ्चकम् ॥ ४४५ ॥
करणं च वसन्तं चाभिनन्दनं च पार्वति ।
तुरङ्गलीलाविजयमानन्दन विलोकिते ॥ ४४६ ॥
आभङ्गाक्षिपुटौ चैव कन्तुकत्रितयं तथा ।
षड्विंशत्कोष्ठबन्धे तु न्यसेन्नवतिमात्रिका ॥ ४४७ ॥
वाञ्जुली राज(त्सं)[झं]पा च ललिता श्रीसनन्दनः ।
श्रीखण्डनं च रङ्गं च तद्वर्णं प्रथमोत्सवौ ॥ ४४८ ॥

---

1. C. 'ह्री' for 'भी'

रङ्गोद्योतितया सिंहलीला श्रीकीर्तिता लसत् ।
तुङ्गागारुगिरित्येवं सप्तविंश(न्मतं) [शेश्यं] कलाः ॥ ४४९ ॥

गीतमद्रा[1]ससौम्यं च राजनारायणांगदक् ।
शेखरं विद्रुमादिश्च गजलीला च कोकिलम् ॥ ४५० ॥

कन्दपूला मणिश्चैव रतिलीला च रङ्गवत् ।
चौतालझग(सं)[झं]पा च क्रियाजूत्सा[2]पदं पुनः ॥ ४५१ ॥

त्रयो दशादधिकशतमष्टाविंशतिकोष्ठके ।
विद्याधरी वर्धनी च जडकेनैकतालिका ॥ ४५२ ॥

विद्वेषणं च प्रत्यङ्गं लक्ष्मीशामरमालिके ।
भूतिलो कालविध्वंसवाग्भूषाभाषया समः ॥ ४५३ ॥

विभूषा जाल उद्घट्टः सिंहनादं ज[3]यानकम् ।
सबिन्दुकं राजविद्यादेकोनत्रिंशके कला ॥ ४५४ ॥

इत्येवं शतयुग्मे तु द्वयाधिक्येन मेरुके ।
प्रस्तारे तालसंख्यातं मात्रारूपेण लक्ष्यते ॥ ४५५ ॥

शतं सहस्रमयुतं लक्षं कोटि यथाक्रमम् ।
तावद्वा संख्यया द्वन्द्वं वर्धयेदपरं पुनः ॥ ४५६ ॥

भूखण्डम्[4]तमित्याहुः प्रासादं मध्यखण्डजम् ।
आकाशखण्डे शिखरं त्रिलोके त्रिविधार्यका[5] ॥ ४५७ ॥

प्रथममेकस्थानं द्वितीयं दशसंयुतम् ।
तृतीयं शतमित्याहुश्चतुर्थं तु सहस्रकम् ॥ ४५८ ॥

1. C. 'गतमुद्रा' for 'गीतमद्रा'
2. C. 'क्रीडाजूत्सा' for 'क्रियाजूत्सा'
3. B. 'च' for 'ज'
4. C. 'द्रु' for 'भू'
5. C. 'मताः' for 'र्यका'

पञ्चमं दशसाहस्रं षष्ठं लक्षं तथैव च ।
सप्तमं दशलक्षं च अष्टमं कोटिरुच्यते ॥ ४५९ ॥

नवमं दशकोट्यस्तु दशमं शतकोटयः ।
अर्बुदं रुद्रसंयुक्तं न्यर्बुदं द्वादशं भवेत् ॥ ४६० ॥

खर्वं त्रयोदशस्थानं महाखर्वं चतुर्दशम् ।
पद्मं त्रिपञ्चकं चैव महापद्मं तु षोडशम् ॥ ४६१ ॥

क्षोणी सप्तदशा चैव महाक्षोणी दशाष्टकम् ।
शङ्खं नवदशा चैव महाशङ्खं च विंशतिः ॥ ४६२ ॥

क्षितिरेकविंशतिस्थानं प्रमाणस्थाननिर्णयम् ।
मेरोरुपर्यधस्तातु द्रुतौ तालौ प्रकीर्तितौ ॥ ४६३ ॥

त्रिमात्रान्तं प्लुतं ज्ञेयं तुरीयं तालमात्रिका ।
एकतालात्समारभ्य जृम्भिता मेरुविस्तरे ॥ ४६४ ॥

॥ इत्यौमापते गीतशास्त्रे मेरुप्रस्तारलक्षणं नाम पञ्चविंशोऽध्यायः ॥

---

## ॥ अथ षड्विंशोऽध्यायः ॥

मेरौ षोडश कोष्ठानि मूलादेकान्तिमानि वै ।
द्रुतं लघुश्च गुरुपौ लगपागपदा लगौ ॥ ४६५ ॥

पलगा द्रुतमित्येवं मूलपंक्तौ विधीयते ।
द्वितीयपंक्तौ लगपा गपौ दलगपालगौ ॥ ४६६ ॥

पगपालो(न)[1][ग]इत्येवं यथाक्रममुदीरितम् ।
तृतीयपङ्क्तौ गपदा लगौपल गपागपौ ॥ ४६७ ॥

दलगा(नन)[2][गग] इत्येवं यथाक्रममुदीरितम् ।
चतुर्थपङ्क्तौ पदला गपौलगपलागपौ ॥ ४६८ ॥

---

1. C. 'लौग' for 'न'
2. C. 'पागग' for 'गानन'

गप(नोनन)[1][गोगग]इत्येवं यथाक्रममुदीरितम् ।
पञ्चमपङ्क्तौ दलगाः पलगाः पदलागपौ ॥ ४६९ ॥

द(नोनोन)[पगो गग]इत्येवं क्रमेणैव विधीयते ।
षष्ठे गलप[2]गाः पोदलगपादल इत्यपि ॥ ४७० ॥

सप्तमे गपपा दोल्दपला गग इत्यपि ।
अष्टमे पदलागोल गपगाप इति क्रमात् ॥ ४७१ ॥

नवमे दलगापौल गपदा इति हि क्रमात् ।
दशमे लगपागोप ल्ल इत्यनुपूर्वशः ॥ ४७२ ॥

एकादशे गपौ पोद लगाविति हि तैः क्रमात् ।
द्वादशे पदला गोप लगपाद त्रयोदशी ॥ ४७३ ॥

चतुर्दशे तु दल्दाः [3]पौर्णायां तु द्रुतं लघु ।
षोडशे द्रुतमेकं स्यान्मेरुप्रस्तार ईरितः ॥ ४७४ ॥

अन्यो मेरुविशेषः—

षोडश प्रभृति कोष्ठवीथिका-
मूलकोष्ठविलिखितेदपादिके ।
कोष्ठमत्र शिवतत्वगं शतं
साष्टविंशतिपदामवर्ज(येत्)[यन् ?] ॥ ४७५ ॥

अष्टाविंशतिकोष्ठेषु वर्जिते प्लुततो भवेत् ।
द्व्यं शतं पुनस्सप्त तालाः प्रस्तारसंमताः ॥ ४७६ ॥

लघ्वक्षराणां पञ्चानां पठनाद्घटिका भवेत् ।
सहस्रेण चतुश्शत्या त्रयस्त्रिंशत्समेतया ॥ ४७७ ॥

---

1. C. 'गागग' for 'गगोग'
2. C. 'ललप' for 'गलप'
3. C. 'गाः' for 'दाः'

अष्टाविंशतिसंयुक्तसहस्रद्वयकीर्तनात् ।
एकनाडी परिज्ञानं शुद्धद्रमिडभाषया ॥ ४७८ ॥

॥ इत्यौमापते गीताशास्त्रे षोडशकोष्ठमेरुप्रस्तारं नाम षड्विंशोऽध्यायः ॥

---

## ॥ अथ सप्तविंशोऽध्यायः ॥

स्यात्षट्पितापुत्रिमूकलदेशो चच्चत्पुटाश्चाचपुटादितालौ ।
द्रु(तौ)[तो]द्रुतार्धं द[1]मदे च तालप्रसाद उक्तस्सकलार्कमात्रः॥ ४७९ ॥

इति मार्गप्रसादतालः ।

स्यात्षट्पितापुत्रिकतश्चतुर्भिः चच्चत्पुटाच्च त्रिभिरेव भेदैः ।
द्वाभ्यां तदा चाचपुटाल्लदाभ्यां प्रसादयुक्तो द्रुतवादयुग्मा ॥ ४८० ॥

शुद्धप्रसाद एष स्यात्तालविद्भिः प्रकीर्तितः ।
चक्रकौमोदकीशार्ङ्गपाञ्चजन्यजलादिमान् ॥ ४८१ ॥

नारायणो नादमूर्तिस्तालप्रासादमास्थितः ।
तालप्रासादतत्त्वज्ञो भुक्तिमुक्तिं च विन्दति ॥ ४८२ ॥

सोमसूर्यात्मकास्तालाः सर्वे देवि समीरिताः ।
मुक्ताफलं सर्षपतुल्यरूपं जित्वा मधूच्छिष्टगतं विधाय ॥ ४८३ ॥

सूचीगताभ्यां परिघट्टनायां
तन्नादवित्केवलमेव पाणिः ।
प्रासादौ शुद्ध(भूमार्गषाख्यौ[2][मूलाख्यावथविंशतिमातिमात्रकौ]
संशुद्धगलदौसप्तमरालादौमहेश्वरि[3] ॥ ४८४ ॥

इत्यौमापतेगीत शास्त्रेमार्गप्रसाद शुद्धप्रसादलक्षणं नामसप्तविंशोऽध्यायः ।

---

1. B. 'न' for 'द'
2. C. 'मूलाख्यावथविंशतिमात्रकौ' for 'भूमागषाख्यौ'
3. C. This half line appears in 'C' only

## ॥ अथाष्टाविंशोऽध्यायः ॥

श्रीपञ्चरात्रजांस्तालान् शृणु देवि समाहिता ।

स्याच्चक्रताले गुरुयुग्ममध्ये
द्रुतोऽष्टमात्रा विजयप्रदोऽयम् ।
द्रुतोदरश्चोर्ध्वमधश्च ताल[1]:
प्लुतस्सुखार्थाय सशंखतालः ॥ ४८५ ॥

दलौ द्रुतश्चाऽथ लघुत्रयं च
जयप्रदो नन्दकताल एषः ।
लघ्वाकृतिस्सर्वमनोरथाप्त्यै
कौमोदकी ताल इति प्रणीतः ॥ ४८६ ॥

एको गुरुश्चाथ लघुद्वयं स्यात्
अभीष्टसिध्यै खलु शार्ङ्गतालः ।

तस्मात्तालायुधः श्रीमान् विष्णुः शृङ्गारदेवता ।
गीतं वाद्यं च नृत्तं च तालमूलं यतस्ततः ॥ ४८७ ॥

सङ्गीतविद्भोगमोक्षौ याति विष्णुप्रसादतः ।
चक्रादितालध्वनिना पूर्णमाराधनं भवेत् ॥ ४८८ ॥

यज्ञा भवन्ति देवानां पञ्चादिध्वनयस्सदा ।

॥ इत्यौमापते गीतशास्त्रे चक्रादिपंचतालप्रस्तारं नामाष्टाविंशोऽध्यायः ॥

## ॥ अथैकोनत्रिंशोऽध्यायः ॥

शृणु देवि प्रवक्ष्यामि काललक्षणमद्भुतम् ॥ ४८९ ॥

ऊर्ध्वाधः पृष्ठमुखा द्रुतलघुगुरवः प्लुतं चैव ।
एतेषु पाणिचारस्तत्तन्नामानुकूलगतिः ॥ ४९० ॥

---

1. B. 'लासः' for 'ताल'

द्रुतलघुगुरुप्लुतानां युगलं मिथुनं प्रकीर्त्यते देवि ।
मिथुनेषु पाणिचरणः पाणिद्वितयेन कर्तव्यम् ॥ ४९१ ॥

द्रुतलघुगुरुप्लुतानां विरामयोगे करोति कः किञ्चित् ।
लघुराहवनीयवेश्मरेखा द्रुत उन्मीलितगार्हपत्यमूर्तिः ।
गुरुमूर्तिमुशन्ति दक्षिणाग्निं त्रिपदामूलमिहाक्षरं तकारः ॥ ४९२ ॥

द्रुतस्य लक्षणं ब्रुहि[1] बिन्दुषोडशता ध्रुवम् ।
लघुद्रुते द्वये न स्याल्लघुयुग्मं गुरुर्भवेत् ॥ ४९३ ॥

गुरुमूर्ध्नि लघुस्थित्या प्लुतस्संपरिकीर्तितः ।
एतद्विकारतालानां कोटिकोटिविजृम्भणम् ॥ ४९४ ॥

प्रतिकोष्ठं लिखेत् बिन्दुं मेरुमूलादितः क्रमात् ।
पूर्णे षोडशके बिन्दौ द्रुतं तस्मिन्प्रजायते ॥ ४९५ ॥

कोष्ठाः प्लुतान्तास्सर्वे च न प्लुताद्याः कदाचन ।
एवं मेरुश्च लघ्वादिः गुरुमेरुस्तथैव च ॥ ४९६ ॥

लि(खि)[खेत्] तालेषु रूपेण भवेन्मात्रानिरूपणम् ।
द्रुतःस्या(द्रेहथ)[दिह]संयोगे सानुस्वारादिके प्लुतः ॥ ४९७ ॥

इति प्रोक्तं मया देवि नष्टतालनिरूपणम् ।
मात्रेष्टा सर्वतालेषु (नि)[न] [2]रूपनियमः क्वचित् ॥ ४९८ ॥

एतं तालमनन्तं हि द्रष्टुमिच्छति चेत्तदा ।
क्रमाद्विक्रमतश्चैव मध्यादि च विभेदयेत् ॥ ४९९ ॥

इति मात्रा सन्धिना स्यात् लयस्तालान्तरालजः ।
सहस्रेण चतुश्शत्या त्रयस्त्रिंशत्समेतया ॥ ५०० ॥

लघ्वक्षराणां पञ्चानामावृत्त्या घटिका भवेत् ।

1. C. 'ब्रमो' for 'ब्रुहि'
2. C. 'न' for 'नि'

स्रोतोवहा द्रुतमुखाः प्लुतगाश्च तालाः
गोपुच्छनाम दधते तदधःक्रमेण ।
मध्ये कृशश्च गुरुरा(पु)[वु]जमद्दलात्मा
तालो भवेदथ समास[1]यथार्थसंज्ञाः ॥ ५०१ ॥

॥ इत्यौमापते गीतशास्त्रे काललक्षणं नाम एकोनत्रिंशोऽध्यायः॥

## ॥ अथ त्रिंशोऽध्यायः ॥

ईश्वरः—

शुद्धसालगसंकीर्णैः मद्दलास्त्रिविधा मताः ।
शुद्धमद्दलविस्तारष्षण्णवत्यङ्गुलो भवेत् ॥ ५०२ ॥

शुद्धमद्दलदीर्घं स्यादूनपञ्चाशदङ्गुलम् ।
शुद्धे तु मद्दलमुखं षोडशाङ्गुलमिष्यते ॥ ५०३ ॥

अपामार्गात् तथाश्वत्थान्माञ्जनाभस्मकल्पना ।
गोचर्मबन्धनं कार्यं मुखयोर्वलये तथा ॥ ५०४ ॥

द्वयाशीत्यङ्गुलाभोगस्सालगे मद्दलो भवेत् ।
आयामस्तु तदर्धं स्यात् सालगे मद्दली तथा ॥ ५०५ ॥

चतुरङ्गुलहीनः स्यात्संकीर्णो मद्दलः पुनः ।
सालगेऽपि च संकीर्णे कर्तव्यं दृढबन्धनम् ॥ ५०६ ॥

तद्धिकुथोटे शिवश्चाजो रुद्रो विष्णुश्च देवताः ।
तकारो जायते बालमक्षिकाहस्तताडनात् ॥ ५०७ ॥

बाडबज्वालघातोऽप्सु धिकारस्यैव लक्षणम् ।
स्वसृष्टशक्तौ रुरुविग्रहायां
ब्रह्मा रुरुस्तामनुधावति स्म ।
तथाऽम्बुकायां भुवि तत्खुरोत्था
नादस्तु(लो)थोकार इति प्रणीतः ॥ ५०८ ॥

---

1. C. 'स्तु' for 'स'

ठेकारः खेमरुद्घाता (न्यो)[घो] नादस्स तु तत्समः।
चत्वारि तद्धिकृथोटे स्युर्मूलं वाद्याक्षरस्य वै ॥ ५०९ ॥

थोकारश्शक्तिरूपः स्यात्तधिठे स्युः शिवांशकाः।
शाखाक्षराणि चैतेषां चतुर्णां द्वादशैव तु ॥ ५१० ॥

टवर्गश्च तवर्गश्च कवर्गश्च ङवर्जिताः।
हकारश्च लकारश्च नानाशब्दप्रसूतयः ॥ ५११ ॥

अलकात्कर्तरि शब्दः त्रिंशत्कोट्यभिवर्धयेत।

॥ इत्यौमापते गीतशास्त्रे मद्दललक्षणं नाम त्रिंशोऽध्यायः ॥

---

## ॥ अथैकत्रिंशोऽध्यायः ॥

ईश्वरः—

द्वात्रिंशदङ्गुलायाममौजं वाद्यं विधीयते ॥ ५१२ ॥

अष्टाविंशाङ्गुलं मध्यं षट्पंचाशन्मुखाङ्गुलम्।
षाण्मासिकस्य वत्सस्य स्वयमेव मृतस्य च ॥ ५१३ ॥

चर्मणा मुखबन्धोऽस्य जीवा स्यादश्वबालजा।
त्सेङ्कारमुख्यास्तत्र स्युः शब्दाः पूर्वोदिताः स्वयम् ॥ ५१४ ॥

एतन्मुखानि वाद्यानि बहूनि कमलेक्षणे।
पदिश्च कुण्डली चैव तथापहरणानि च ॥ ५१५ ॥

गतिर्जोका[1] च मधुरो मृदुश्चैव घरामरः।
खणिर्विटंको[2]बोट्टाल इति शब्दप्रभेदकाः ॥ ५१६ ॥

॥ इत्यौमापते गीतशास्त्रे आवुजादिलक्षणं नाम एकत्रिंशोऽध्यायः ॥

---

1. B. 'गतिजोका' for 'गतिर्जोका'

2. B. 'कणिविटङ्को' for 'कपिर्विटंको' and C. विटंको for 'विटंका'

## ॥ अथ द्वात्रिंशोऽध्यायः ॥

ईश्वरः—

श्रृणु देवि प्रवक्ष्यामि नृत्यमष्टविधं पुनः ।
ताण्डवं चैव नृत्यं च (वे)[प्रे]रणं दण्डरा (कस)[सक]:.॥ ५१७ ॥

स्थित्यानन्दमनोहारि संहार इति ताण्डवम् ।
लास्यं तु नर्तनं चैव खेलकं[1] कुण्डली तथा ॥ ५१८ ॥

भारती सात्वती चैव कैशिकी च वरायणी ।
शतमेकोत्तरं नृत्ये प्रबन्धाः परिकल्पिताः ॥ ५१९ ॥

हस्तदृष्टिगतीनां तु मूलं शब्दो यतस्ततः ।

॥ इत्यौमापते गीतशास्त्रे अष्टविधनृत्यकथनं नाम द्वात्रिंशोऽध्यायः ॥

---

## ॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

ईश्वरः—

लास्यताण्डवयोर्भेदं कथयामि तवाम्बिके ॥ ५२० ॥

हस्तदृष्ट्याप्याभिनयं लास्यं रसनिरन्तरम् ।
उद्भटं तत्तु विज्ञेयं ताण्डवं ताम्र[2]लोचने ॥ ५२१ ॥

शिरोभेदं प्रवक्ष्यामि सावधानाम्बिके श्रृणु ।
समा लोके न सजातमपरं प्रथमं भवेत् ॥ ५२२ ॥

ललितं कान्तिसंयुक्तमूर्ध्वमूर्ध्वे विलोकनम् ।
द्रुतं वेगयुतं प्रोक्तं स्थापनं स्थितिभासुरम् ॥ ५२३ ॥

समौवमपिधालापं भीतिस्तु भयदर्शनम् ।
आतुरं पीडितं भावमन्यत्क्षिप्तं लघुक्रिया ॥ ५२४ ॥

---

1. C. 'पत्तलं' for 'खेलकं'
2. C. 'पद्मलोचने' for 'ताम्रलोचने'

आक्रन्दं रोषसंयुक्तं सति सत्वं प्रगल्भता ।
स्निग्धं स्नेहयुतं मुग्धं अज्ञानं(पिप्पिकं)[1][विस्मितं) ततः ॥ ५२५ ॥
आश्चर्यसहितं देवि सविज्ञानं विवेकिता ।
अवि(द्याना)[2][चारा]त्मकं जातमविवेकं वरानने ॥ ५२६ ॥
कोमलं सौकुमार्यं तु सुल्लामं प्रसादनम् ।
सुरागं वर्णसंयुक्तं तन्मुखं दुर्घटं किल ॥ ५२७ ॥
शुभं सौन्दर्यकं देवि सुप्रबोधं तु पार्वति ।
कामुकं वांछया युक्तं मोहनं मोहनं तथा ॥ ५२८ ॥
राजहंसं प्रिये देवि हंसक्रीडागतिः परम् ।
रवितेज इति ख्यातं भास्करस्य समप्रभम् ॥ ५२९ ॥
आराध्यमर्चनोद्युक्तं शिरोभेदाः प्रकीर्तिताः ।
अष्टाविंशतिरुत्पन्नाश्शिरोभेदा मयोदिताः ॥ ५३० ॥
इत्यौमापते गीतशास्त्रे शिरोभेदलक्षणं नाम त्रयस्त्रिंशोऽध्यायः ॥

## ॥ अथ चतुस्त्रिंशोऽध्यायः ॥

करुणं कोमलं कान्तं कन्दर्पं चैवमन्वितम् ।
प्रसन्नं हास्यकं क्रूरं कुन्तलं सर्वदं शुभम् ॥ ५३१ ॥
कौमतापं स्व[3]भाषाङ्कं युद्धं च निपुणं भवेत् ।
कटाक्षं स्मरणं कान्तललाटं लास्यरूपजम् ॥ ५३२ ॥
गीतसारं सुमोहाख्यं परिणाममनोहरम् ।
कर्णरूपं विशालाक्षं विमुखं चाङ्कुरं तथा ॥ ५३३ ॥
सन्तापं स्मरकालं च केशाग्रं किरणं तथा ।
भ्रूयुद्धं विवरं विश्वं बिन्दुस्तोमकराश्रयम् ॥ ४३४ ॥

1. C. 'विस्मितं' for 'पिप्पिकम्'.
2. C. 'चारा' for 'द्याना'
3. C. 'सु' for 'स्व'.

आकाशरूपसंपत्ति काकाक्षं नेत्रभेदनम् ।
दृष्टिभेदास्तु तुल्यार्थाः स्वनाम्ना करुणादिकाः ॥ ५३५ ॥

॥ इति दृष्टिभेदः ॥

भ्रान्तं शून्यमनिर्भेदमनृतं मधुरं तथा ।
विकृतं ग्लानितं चैवं का[1]न्तं लज्जारसं भवेत् ॥ ५३६ ॥

मुकुलं दलितं चैवं केकरंतोदरं तथा ।
वत्सलं चञ्चलं चैव सौन्दर्यं च विनोदवत् ॥ ५३७ ॥

सञ्चारदृष्टिभेदाः स्युरेवंभूता महेश्वरि ।

॥ इति सञ्चारदृष्टिः ॥

चकितं सुमुखं शून्यं पुष्टाङ्गं मरुतं मुहुः ॥ ५३८ ॥

मेघमूर्ध्नि करं चैव प्रमाणं परमं कलाः ।

॥ इति प्रमाणभेदः ॥

ऊर्ध्वकेशं रथाङ्गं च मध्यमं च विलम्बकम् ॥ ५३९ ॥

नलिनं भावकं चैव सकलं शान्तरूपकम् ।
आलिङ्गनं चक्रपादं हंसाख्यं तत्परं भवेत् ॥ ५४० ॥

॥ इति बाहुभेदाः ॥

ककुधं कुदुरं मोहं मृहादं मुख[2]देशकम् ।
भावकं कलहंसं च उरोभेदं च सप्तधा ॥ ५४१ ॥

कुम्भाख्यं पूर्णकं लास्यमर्धकुम्भं विवादिकम् ।
हंसोदरं हयानन्दं करिकुम्भं सुमोहनम् ॥ ५४२ ॥

सर्वव्यापकसंचारकटिभेदं चतुर्दश ।

॥ इति कटिभेदाः ॥

उरोबाहुकटिप्राणभेदा एवंविधा मताः ॥ ५४३ ॥

॥ इत्यौमापते गीतशास्त्रे अङ्गाभिनयलक्षणं नाम चतुस्त्रिंशोऽध्यायः ॥

1. C. भ्रांतं for कांतं
2. C. 'उप' for मुख

## ॥ अथ पञ्चत्रिंशोऽध्यायः ॥

हस्तभेदं प्रवक्ष्यामि शृणु तत्त्वेन पार्वति ।
उत्तानितमधोवामहस्तमङ्गुष्ठजृम्भितम् ॥ ५४४ ॥

दक्षिणं तन्मुखं चोर्ध्वमवाक्चण्डं[1] तदिष्यते ।
अन्योन्यं पाणिना बाहुरन्योन्यं यत्तु गृह्यते ॥ ५४५ ॥

तत्स्वस्तिकमिति प्रोक्तं रम्यमेतद्वरानने ।
शिरोदेशं समारभ्य पाणिभ्यां केशबन्धनम् ॥ ५४६ ॥

अन्योन्याभिमुखं यत्तु वरणं केशबन्धनम् ।
पाणिभ्यामवटं[2] प्राप्य दन्तिदन्तसमा स्थितिः ॥ ५४७ ॥

दन्तिपक्षमिति प्रोक्तमेतच्चित्रं महेश्वरि ।
अन्तर्वक्रतरं पाणिद्वन्द्वं तु मुकुलाकृतिः ॥ ५४८ ॥

श्लिष्टाङ्गुष्ठद्वयं प्रोक्तं ऋजुतन्मुकुलं भवेत् ।
उत्तानितौ (च)[व][3]क्रतलौ श्लिष्टौ हस्तौ वरानने ॥ ५४९ ॥

बहिरङ्गुष्ठसंयुक्तौ अर्घ्यहस्तं प्रकीर्त्यते ।
प्रणतोन्मुखकोदण्डसमानमुकुलाकृतिः ॥ ५५० ॥

श्लिष्टाङ्गुलिकरद्वन्द्वं पुष्पाञ्जलिरिति स्मृतः ।
हस्तेनास्फालनं बध्यादुत्तानिततले करे ॥ ५५१ ॥

वामे वा दक्षिणे वापि तत्प्रध्या[4]नं प्रिये मतम् ।
पाणिद्वन्द्वं समाश्लिष्य ऋजुपार्श्वद्वयेऽपि च ॥ ५५२ ॥

यत्तु प्रहर्तुमुद्योगस्तत्क्षणं परिकीर्तितम् ॥
पश्चात्कण्ठं समाश्लिष्य पाणिभ्यां द्विगुणाकृतिः ॥ ५५३ ॥

---

1. C. 'बद्धं' for 'चण्डं'
2. C. 'श' for 'टं'
3. C. 'वक्र' for 'चक्र'
4. C. 'ध्वा' for 'ध्या'

गलबन्धमिति प्रोक्तं बाहुसन्धिरधोमुखम् ।
वक्ष्यमाणपताकायुक् हस्तद्वितयबन्धनात् ॥ ५५४ ॥
हृदयासक्तितस्तज्ज्ञैरञ्जलिस्समुदाहृतः ।
पाणिद्वन्द्वभवा भेदा इत्येकादश वर्णिताः ॥ ५५५ ॥
पाणेर्भेदांस्तु वक्ष्यामि बहुशो वरवर्णिनि ।
अङ्गुष्ठमृजुवक्राग्रं तर्जनी च सुसङ्गता ॥ ५५६ ॥
मध्यानामिकयोः पृष्ठे कनिष्ठा वक्रतां गता ।
प्रकीर्णमिति विख्यातं भ्रामरं कथ्यते परम् ॥ ५५७ ॥
अङ्गुष्ठमध्ययोरूर्ध्वं स्थितयोरन्तरे स्थिता ।
तर्जनी यत्र तत्प्रोक्तं भ्रमरं वक्रितेतरम् ॥ ५५८ ॥
क्रमेणोपरि विन्यस्तवक्रिताङ्गुलिसंचयः ।
लतेति कथ्यते हस्तं नाट्यशास्त्रार्थवेदिभिः ॥ ५५९ ॥
ईषद्वक्रपरिन्यस्ततर्जन्याद्यङ्गुलीदलम् ।
ललितं कथ्यते सद्भिः अभयं तु समोन्नतम् ॥ ५६० ॥
तदेवाप्रसृतं स्तब्धं शृणुष्व गिरिकन्यके ।
तदेवोर्ध्वीकृतं हस्तं वर्धमानं प्रकीर्तितम् ॥ ५६१ ॥
दूरप्रसारिताङ्गुष्ठतर्जनी यत्र वक्रिता ।
तिस्रस्त्वन्याश्च संसृष्टा रोवि(च)[प]क्षं[1] तदीरितम् ॥ ५६२ ॥
तदेवोर्ध्वीकृतं हस्तममल परिकीर्तितम् ।
मेखलावत्परिभ्रान्तं मेखलेति प्रकीर्तितम् ॥ ५६३ ॥
अधोविसृष्टविन्यस्तसर्वाङ्गुलिमनोहरम् ।
किञ्चिदुन्नतमध्यं च कटकं [2]समुदाहृतम् ॥ ५६४ ॥
अङ्गुष्ठतर्जनीवक्रौ समेतौ द्वौ पराह[3]ताः ।
वृत्ताकारेण संलक्ष्य हस्तं प्राहुस्सुधाकरम् ॥ ५६५ ॥

---

1. B. 'रोविपक्षं' for 'रोवि चक्षं ; C har 'रोच्विपक्षं'
2. C. 'कर्कटं' for 'कटकं'
3. C. 'न' for ह

पताकाचलनं यत्तु करतालमुदाहृतम् ।
विवृतौ[1]वक्रतां प्राप्तौ[1]समस्ताङ्गुलिपल्लवौ[1] ॥ ५६६ ॥

उत्तानितोन्नततलौ नलिनं तदिहोच्यते ।
यथार्थनामा मुष्टिस्तु तदेव विरलं श्लथम् ॥ ५६७ ॥

तर्जन्यङ्गुष्ठकौ द्वौ तु प्रसृतौ कुञ्चिताः पराः ।
अर्धचन्द्रकमाहुस्तमूर्ध्वं तन्मूर्ध्नि मूर्धकम् ॥ ५६८ ॥

बहिर्मुखकटीदेशे कृतस्सकटिवक्रकः ।
दीर्घाङ्गुष्ठौ च युक्तोऽसौ श्लिष्टा दीर्घा पराङ्गुलिः ॥ ५६९ ॥

विस्तारायामवान् हस्तः पताका स उदाहृतः ।
तर्जन्यूर्ध्वमुखे यत्र श्लिष्टाङ्गुष्ठानताः पराः ॥ ५७० ॥

तदेव ध्वजमित्याहुः शिखरं तर्जनीं विना ।
पताकाव्यत्ययश्चात्र कनिष्ठाङ्गुष्ठमेलनात् ॥ ५७१ ॥

शेषप्रसरणात्त्वेव त्रिपताकं करं विदुः ।
ईषद्द्विगुणिता यत्र तर्जनीमुष्टिबन्धकः ॥ ५७२ ॥

कपित्थं तु कनिष्ठायां गणनात् कटकं भवेत् ।
कनिष्ठाङ्गुष्ठके दीर्घप्रसृते मध्यमानता ॥ ५७३ ॥

मृगशीर्षवदाभाति तथैव मृगशीर्षकः ।
अधः कृतपताकायां तर्जनी कुञ्चिका भवेत् ॥ ५७४ ॥

शुकतुण्डः प्रसार्यैनां कर्णस्पर्शश्रवः कृतम् ।
अङ्गुल्यो वलिताश्लिष्टा सर्वा यत्र फणाकृतिः ॥ ५७५ ॥

नागेन्द्रहस्तसरणात्तदेवोरगसंज्ञकः ।
मध्यमादिकनिष्ठान्ताः प्रसृतास्तास्सुधाकरे ॥ ५७६ ॥

यदा सा हृदये लग्ना ध्यानं नाभौ च योगभाक् ।
पताकोक्ताश्च ता नम्राः पात्रं कोशं दरश्लथा ॥ ५७७ ॥

---

1. C. plural for dual.

तर्जन्यङ्गुष्ठमध्याः स्युर्दरमिश्राग्रसंयुताः ॥
अनामिकाकनिष्ठे च विनते शुकपादके ॥ ५७८ ॥
शुकपादे कनिष्ठा स्यात्प्रसृतानामिकानता ।
दरबन्धच्युतास्सर्वाः सिंहास्यं तदुदाहृतम् ॥ ५७९ ॥
त्रिपताकाश्लथा यत्र शूलं श्लिष्टाग्रसंमता ।
त्रिशिरस्तर्जनीनत्या बद्धान्येकशिरः स्मृता ॥ ५८० ॥
स यदेकशिरोमूर्त्या सूचीद्वयविमोचना ।
कर्तरी तज्जया युक्ता हंसपक्षाः प्रकीर्तिताः ॥ ५८१ ॥
पताका तर्जनीवक्रा यदरालकनिष्ठिका ।
प्रसृता च तदङ्गुष्ठानामिकामूलमालिखेत् ॥ ५८२ ॥
यथा प्रसारणादेव सन्दंशकमुदाहृतम् ।
तर्जनीमूलमध्याग्रांगुष्ठयुक्तया तदंशकौ ॥ ५८३ ॥
भवभावरतिप्रायमोल्हणासम्पदन्विता ।
नयवेदाभिधाश्शेषाः ऊहनीयं महेश्वरि ॥ ५८४ ॥

॥ इति हस्तभेदाः ॥

द्रुतं द्रुतगतिः पादः परितश्चलितश्चलन् ।
मैत्रमन्योन्यसंबन्धो विमुखं प्रत्ययाननः ॥ ५८५ ॥
नाङ्गुष्ठाभ्यां स्थितिः प्रोक्त अङ्गुलाधारनामकः ।
बहुलं बहुसंचारः पदद्वन्द्वसमुच्चलन् ॥ ६८६ ॥
सीरणभ्रमतुल्यैकपादांगं चक्रपादिति ।
स्पर्धया गतिरन्योन्यं विपादी पादयोर्द्वयोः ॥ ५८७ ॥
अन्तरिक्षं मुखं पादोत्तानतलस्थितिः ।
विरलं विश्लथायास माध्यपादेहमोहनम् ॥ ५८८ ॥
पदद्वन्द्वे च सोलंघ्यः समयानं तु काकपात् ।
हंसयोः पार्श्वसंगत्या गतिर्हंसगतिः क्रमात् ॥ ५८९ ॥
भ्रमभ्रमाननमंभ्रीय गतिचाचालयं स्मृतम् ।

॥ इति पादाः ॥

समं समस्थितिः पार्श्वं पार्श्वेन स्थितिरिष्यते ॥ ५९० ॥

उभयं पार्श्वयोस्साम्यात् सप्राणं द्विविधा स्थितिः ।
त्रिभङ्ग्यां ञ्यश्रग्रवनतं समभङ्गं समा स्थितिः ॥ ५९१ ॥

भंगमीषद्भंगाग्रमालीढं पादयोर्द्वयोः ।
पार्ष्णिसंमेलितं स्थानं प्रत्यालीढं विपर्ययात् ॥ ५९२ ॥

पादेनैकेन संस्थानमेकपादं प्रचोदितम् ।
वैशाखं वैष्णवं स्थानं गोपवेषस्य शार्ङ्गिणः ॥ ५९३ ॥

पार्श्वयोः पुरतो वापि प्रसृतौ सरलः पदौ ।
स(म्मार्द)[मार्ष]विषमाखण्डयुतेः सूची बहूच्यते ॥ ५९४ ॥

॥ इति स्थायी ॥

चित्रं विचित्रं स्थानं च विमुखं चैकपादकम् ।
भ्रमरी बहुधा प्रोक्ता नाट्यविद्याविशारदैः ॥ ५९५ ॥

नाटके तत्तदङ्गाङ्गिरसभावसमाश्रयः ।
कल्पनीयः साभिनयः तच्छब्दार्थप्रबोधकम् ॥ ५९६ ॥

शृङ्गारहास्यौ वीरश्च करुणाद्भुतरौद्रकाः ।
सभयानकबीभत्साः शान्तिरित्यादिभावजाः ॥ ५९७ ॥

अनुभावविभावाभ्यां सात्विकव्यभिचारिणः ।
प्रस्तुतोचितमेवात्र कल्पनीयाः पृथक् पृथक् ॥ ५९८ ॥

भावावसानं नृत्यं तु नृत्तं तु रसपोषकम् ।
शब्दप्रबन्ध एव स्यात् प्रधानं नृत्तकर्मसु ॥ ५९९ ॥

यत्किञ्चिन्नृत्तमालोक्य सर्वपापैः प्रमुच्यते ।

इत्यौमापते गीतशास्त्रे (हस्तभेद)[नृत्त]लक्षणं नाम पञ्चत्रिंशोऽध्यायः ॥

## .. अथ षट्त्रिंशोऽध्यायः ॥

नृत्तं पादचतुष्केण गीतं पादचतुष्कतः ॥ ६०० ॥

यथा तथा चतुष्पादश्शब्द एकः प्रजायते ।
त(ण्डि)[द्धि]त्थोठेन सारेण सर्ववाद्ये करक्रमः ॥ ६०१ ॥

जगद्धरि कुधरि कुपादः प्रथमः परिकीर्त्यते देवि ।
धरिधरिगुणककिणिजगजगगुणककि [1]तथा ॥ ६०२ ॥

इति पादो द्वितीयः स्याच्छब्दबन्धे महेश्वरि ।
जगजगकुतकितकिणकिणतकणिकः[2] ॥ ६०३ ॥

इति पादस्तृतीयः स्याच्छब्दबन्धे महेश्वरि ।
तकिन्त्सेकिणकणककिणकधैगुम ॥ ६०४ ॥

शब्दे पादश्चतुर्थोऽयं यथावत्परिकीर्तितः ।
भूचालीनृत्यशब्दोऽयं भवेज्जवनिकापदम् ॥ ६०५ ॥

तघतिट्टघिघिकत्तोंग ।
एवं च प्रथमे पादे शब्दबन्धे महेश्वरि ।

घिंकट्टघिघितत्तो घिः
इति पादो द्वितीयः स्याच्छब्दबन्धो महेश्वरि ॥ ६०६ ॥

धेंकिण्णधेगकिण्ण किण्णाः
इति पादस्तृतीयः स्याच्छब्दबन्धो महेश्वरि ।
दिगिदोगाज्जककिण्णझेंझेगुझेककिण्ण ॥ ६०७ ॥

शब्दपादश्चतुर्थोऽयं यथावत्परिकीर्तितः ।
पुष्पाञ्जलिप्रयोगे च नाना(च)[क]रणरेचकाः ॥ ६०८ ॥

दीर्घद्विपदिशब्देन पुष्पाञ्जलिविमोक्षणम् ।
तारिगिण्णं किट्टकिटितकिटितकतकत्तारिटिकतरिक ॥ ६०९ ॥

---

1. C. 'णक' for 'त'
2. B. 'किणतः' for 'कणिकः'

तरिककिटिकतरिकतहकतरिकतोहकतरिकडैकिं ।
इति द्विपदिशब्दोऽयं चोदितस्तव पार्वति ॥ ६१० ॥

पुष्पाञ्जलिकरे शब्दःपूर्ववत्स्याच्चतुष्पदः ।

करकझेझे कुकुंदकुकुदटटकिननटकिनतेटकिननं, त्थात्झेसैं[1]घनक-जगतोकजेगनगजझे[2]नकिटननकिट तकिण्णक ॥

॥ इति चतुष्पदा ॥

पताकप्रमुखा हस्ताः पादाः स्यू रेचकादयः ॥ ६११ ॥
ततःस्या(द्दुल्ल)[दुत्प]रजतिस्तत्र शब्दः प्रचोदितः ।

थोकतोटकिन थै किं धिन्धिग्गिधिगितोकधैकिंधो किटधें किटकिटि-कटतरि कटतोट कि ननट किनघलांकतकधिः ।

॥ इति उत्परजतिः ॥

तथैकतालमानेन भ्रमरीभिस्समापनम् ॥ ६१२ ॥
भूचालिरेचकी चैव हस्तविक्षेपकर्मसु ।
त्रिष्वेतेषु पदेषु स्यात्स्वेच्छया तालकल्पना ॥ ६१३ ॥
अड्डतास्युत्परजतावेकताली समापने ।
अलङ्काराय चैतेषां तु(र्यकाप)[डुकाच]रि[3]घोण्यपि ॥ ६१४ ॥
झेङ्कारःस्यात्खण्ड(ज)[4][य]तिश्चमत्कारस्तथैव च ।
समवाद्यमिहाङ्गानि प्रबन्धे कीर्तितानि वै ॥ ६१५ ॥
(कट्ट)[तुड्ड]कादिषु[5] षट्स्वेव द्विपदी त्रिपदी तथा ।
चतुष्पदी पञ्चपदी षट्पदी नियमो नहि ॥ ६१६ ॥

---

1. B. 'सज' for 'सैंवज' and C. has 'तोटकिननांकत्थोझेझे for त्थात्झेसैंधं ।

2. C. 'गदगजदाझे' for 'गनगजझे'

3. B. 'तुढ्ढकाचरिघोण्यपि' for 'तुर्यकापरिघोण्यपि'

4. C. 'यति' for 'जति' C. has 'तुटिका' for 'तुर्यका'

5. B. 'तुड्डकादिषु' for 'कट्टकादिषु'

(ल[1]ब्वे)[शब्दे]तु लहरी नाम द्विपदी परिकीर्तिता ।
जेनजगणकिणदिगिदिगिपाः पुनरुक्तम् ॥ ६१७ ॥

जगजगणक्तकिणधा[2]त्रिगुणं पुनरुक्तम् ।
इत्येषा लहरी प्रोक्ता द्विपदी प्रथमोदिता ॥ ६१८ ॥

(भ)[ओ]ङ्कारो द्विपदः पश्चात्कीर्तनीयः पुनः पुनः ।

तट्टकः गदोगदिगिधोगधिट्टगधन्धोन्धिमिकटतट्टकः गदोगदिणिदोगधाः पुनरुक्ताः ॥

(भ)[ओ]ङ्कारपाद इत्येष पुनरुक्तः प्रचोदितः ॥ ६१९ ॥

पंच(वा)[पा]धामुद्ग्रहोद्वावन्तर्यान्द्वितयं पुनः ।
एकपादा समासिश्च स्वेच्छया तालकल्पना ॥ ६२० ॥

धिग्गिन्धिधिकटधोधकिटतकननतकधिक् ।
कटनन्धं किन्नन्धों किनधिमिकटधाः ।
समासादुग्रहेत्येवं द्विगुणोद्घट्टना भवेत् ॥ ६२१ ॥

झेंकिणझेगकिणकिणझें झेंकिण किण किट्टकितरिकिटझें किरिकिटतट्टतन्धा समासावन्तरी द्वन्द्वे द्विगुणोद्घट्टना भवेत् ।

तरिकिटकिरिकिटकहकह झेन्दकिट्टदकदक दुगुदुगु गिरिगुणझेंझेन्धा ।
आभोगोद्घट्टनेत्युक्ता समासौ तु सकृद्भवेत् ॥ ६२२ ॥

भारणाष्टपदी प्रोक्ता पूर्वोङ्कारक्रमेण वै ।
शब्दप्रबन्धनृत्यान्ते गीतस्तालादिनर्तनम् ॥ ६२३ ॥

रागस्तवः स्वेच्छया स्यात् समासिपरिगीतकम् ।

॥ इत्यौमापते गीतशास्त्रे नृत्यशास्त्रे कुण्डलिशब्दप्रबन्धो नाम षट्त्रिंशोऽध्यायः ॥

1. C. 'शब्दे' for लब्दे; B has 'लब्दे'
2. C. 'जेग जेगणकिण्णधा' for जगजगणत्कविणधा

## ॥ अथ सप्तत्रिंशोऽध्यायः ॥

उत्तमं प्राङ्मुखं प्रोक्तं सिंहासननिवेशनम् ॥ ६२४ ॥

उदीच्यं मध्यमं चैव पश्चिमं त्वधमं भवेत् ।
देवी तु दक्षिणे पार्श्वे ब्राह्मणाद्यालयोऽपि च ॥ ६२५ ॥

नायकाभिमुखं पात्रं शेषा वामे प्रतिष्ठिताः ।
पात्रस्य दक्षिणे पार्श्वे मद्दलस्स्यात्प्रतिष्ठितः ॥ ६२३ ॥

वामपार्श्वे आवुजस्य वंशश्शंखस्तु दक्षिणे ।
तद्दक्षिणे तरडिका पृष्ठतो गायकाः स्थिताः ॥ ६२७ ॥

गायकानां पृष्ठतः स्यात् काहलं कांस्यतालकः ।
पात्रस्य वामपार्श्वे स्युर्वाद्याङ्गा झेल्लिकादयः ॥ ६२८ ॥

नृत्यानुसारी तिष्ठेत्तु नटो दक्षिणवामयोः ।
आशीर्वादस्तु (नकादौ) [नान्द्यादौ] ततो नृत्यक्रिया भवेत् ॥ ६२९ ॥

अङ्गानि च चतुष्षष्टी रसभावयुतानि च ।
धींशब्दवान्मद्दलस्स्याज्झेंकारी त्वावुजो भवेत् ॥ ६३० ॥

एतत्तु कुण्डली नृत्यं पापकोटिविनाशनम् ।
आयुष्यं च यशस्यं च स्वर्ग्यं कुलविवर्धनम् ॥ ६३१ ॥

॥ इत्यौमापते गीतशास्त्रे गीतवाद्यनृत्यसमाम्नायशोभिते रसभावलक्षणं नाम सप्तत्रिंशोऽध्यायः ॥

---

## ॥ अथाष्टत्रिंशोऽध्यायः ॥

प्रबन्धभेदं दुर्बोधमेकोत्तरशतानि च ।
प्रत्येकं वर्तते लोके समाचक्ष्व महेश्वर ॥ ६३२ ॥

ईश्वर उवाच—

मातृकीप्रमुखैस्तालैः मध्यमाद्यादिरागकैः ।
क्रमात्प्रबन्ध एव स्यादेकोत्तरशतात्मकः ॥ ६३३ ॥

एवं क्रमाच्चतुष्षष्टितालकः स्यात्प्रबन्धकः ॥ ६३४ ॥

सद्योजाते च वक्त्रे निगमनुतियुते वामदेवे प्रसिद्धे
तत्पुरुषाघोररूपे प्रणवगुणनिधीशान्यवक्त्रे विचित्रे ।
संजातं तत्र तालं क्रमजनितलयं मातृकं क्रौञ्चमेक
श्रीमन्माहेशवक्त्रे करणममलदं रंगराजाश्रितोऽभूत् ॥ ६३५ ॥

नामान्येतानि मुख्यानि प्रसिद्धमिति पंचकम् ।
श्रीरङ्गादिप्रबन्धोऽपि सप्तधा परिकीर्तितः ॥ ६३६ ॥

ऋतुपर्यायनाम च सुभगं च मनोरमम् ।
प्रबन्धतिलकत्वेन ख्यातं लक्षणसंयुतम् ॥ ६३७ ॥

द्वात्रिंशद्रागसंमिश्रं द्वात्रिंशत्ताललालितम् ।
शुद्धसालगसंकीर्णंस्त्रिविधं चापि कथ्यते ॥ ६३८ ॥

स्थूलत्रयं [1]मूलतालं दुष्करं पञ्चकं भवेत् ।
चच्चत्पुटादिभूतं च पर्यायेण प्रकीर्तितम् ॥ ६३९ ॥

एकत्रिंशद्यथातालमेकतालीसमापनम् ।
ध्रुवं लम्बूवर्तनी च करणं खारिका तथा ॥ ६४० ॥

एला च झोंपदा चैव शुद्धसूलादि सप्तकम् ।
ध्रुवं मट्ठिं च निस्सारं पडिमट्ठिं त्रिपादि च ॥ ६४१ ॥

वक्रं च एकतालं च इति छायालगं भवेत् ।
कन्दं धृत्तं चक्रवालं दण्डकं द्राविणं तथा ॥ ६४२ ॥

द्विनेमं जयमाङ्गल्यं संकीर्णं सप्तकं भवेत् ।
मातृकीकरणाख्यं च क्रौञ्चं श्रीरङ्गवर्धनम् ॥ ६४३ ॥

आदिरथ्या पंचतालं इत्येतन्मूलपञ्चकम् ।
चच्चत्पुटं चाचपुटं त्रिभिन्नमकरन्दकम् ॥ ७४४ ॥

वसन्तमिति तालस्य पञ्चतालं प्रकीर्तितम् ।

॥ एते तालाः ॥

---

1. B, 'लयं' for 'त्रयं'

मध्यमादि मालवश्री दीपराटी च मल्हरी ॥ ६४५ ॥
कर्णाटवंकलं चैव वेलावली तथैव च ।
रामक्रीभैरवश्चैव वराटी क्रियदेशिका ॥ ६४६ ॥
कर्णाटगौडगौर्जरी भूपालं (चञ्च)[घन्न ?]शी तथा ।
(थण)[फल]मंजरि कुण्डकि मालवं कौमुदी तथा ॥ ६४७ ॥
नारायणं च सौराष्ट्रं वङ्कलं पूर्वगौडकम् ।
छायागौडं च देशी च केदारं रेवगुप्तकम् ॥ ६४८ ॥
(मौ)[पा ?]डीरागं वसन्तं च आन्धाली रागनाडिका ।
पुलिन्दी ललिता चैव रागनाम प्रकीर्तितम् ॥ ६४९ ॥
गजाश्वधनलाभश्च पुत्रलाभं महासुखम् ।
योजनादिप्रबन्धोऽपि तस्य वा जृम्भते तदा ॥ ७५० ॥
उत्तममर्धगीतं स्यान्मध्यमं पादमेव च ।
अधमं शब्दमात्रेण प्रबन्धादिक्रमं भवेत् ॥ ६५१ ॥
प्रबन्धानां पञ्च सप्त नवतालात्मनां क्रमात् ।
लक्षणं गीतशास्त्रज्ञैः यथापूर्वं प्रकल्प्यते ॥ ६५२ ॥

॥ इति द्वात्रिंशत्तालप्रबन्धः ॥

भगवन्भवता प्रोक्ताः श्रुताः प्रीतिफलप्रदाः ।
प्रबन्धलक्षणं ब्रूहि सर्वकामफलप्रदम् ॥ ६५३ ॥
मातृकादिप्रबन्धेषु षोडशः परिकीर्तितः ।
सोऽयं ध्वनिविलासाख्यस्तथाऽमृतकलेति च ॥ ६५४ ॥
प्रबन्धोऽयं भुवि ख्यातस्सर्वसिद्धिफलप्रदः ।
प्रबन्धस्यास्य महतो नारदो ऋषिरीरितः ॥ ६५५ ॥
छन्दांस्यस्य बहून्येव वाराहीदेवताश्रिताः ।
वीरशृङ्गारयोर्नित्यं गातव्योऽयं मनीषिभिः ॥ ६५६ ॥
भवन्ति षोडशाश्चैव रागास्सकलरञ्जकाः ।
माळवश्रीवराटी च शौक्षी शौचयतस्ततः ॥ ६५७ ॥

रामक्रीरथ कम्बार्थिछायाख्यश्शुद्धभैरवः ।
पुलिन्दी मालवो गौडस्तथा मङ्गलकौशिकः ॥ ६५८ ॥

कर्णाटगौडो गौडी च तथा वृषभसंज्ञकः ।
नाट्टा ततश्च मल्हारी षोडशेति प्रकीर्तिताः ॥ ६५९ ॥

इति चन्द्रकलाभिख्ये प्रबन्धे पूर्वसंमुदे ।
अनुक्रमास्तु तालानां इदानीं कथ्यते मया ॥ ६६० ॥

चच्चत्पुटश्चाचपुटः षट्पितापुत्रिकस्ततः ।
चतुर्थनामतालस्य सिंहलीलस्तथैव च ॥ ६६१ ॥

ध्रुवश्च मट्टितालश्च त्रिपदाख्यस्ततः परम् ।
लम्बूश्च करणाख्यश्च निस्साराख्य एव च ॥ ६६२ ॥

विलम्बितादिकोमट्टि आदितालस्ततो परः ।
जोंबडाख्योऽड्डुताली च एकताली प्रकीर्तिता ॥ ६६३ ॥

इति षोडश तालास्ते प्रबन्धे परिकल्पिताः ।
इति चन्द्रकलाभिख्ये प्रबन्धे कथिताः पुरा ॥ ६६४ ॥

एतत्प्रबन्धश्रवणं सर्वसिद्धिफलप्रदम् ।
भोगदं मोक्षदं चैव एतच्चित्रं महेश्वरि ॥ ६६५ ॥

॥ इति षोडशतालप्रबन्धः ॥

मातृकिः, कन्दं, आर्यं, कलहंसः, चक्रवालं, चतुष्पदि, वृत्तं, वृत्तं, हयलील, गोन्धि, विजयः, तालार्णवं, वस्तुषट्पदि, गद्यं, हरिपूर्वकं, ध्वनिविलासं, पञ्चतालं, स्वराङ्कं, अङ्कध्वनि, दण्डकं, शरभलील, आमण्डनं, नन्दनं, द्विपदं, क्रौञ्चपदं, सलील, हयमाला च ध्वनि, द्राविणं ढेंकि, चचरि, जयं, श्रीलम्बु, कैवाटं, सिंहपदं, श्रीखण्डनं, करणाख्यं, गलबन्धनं, पाट, पद्कानं, मिश्रकं, चित्रकं, स्वरमं, पाटमं, अङ्कवारिणि, त्रिपदि, हंसलील, दोल्हरि, चरिज, धवलं, त्रिभङ्गि, रणरंगि, सिंहविक्रान्तकं, स्वरपूर्वं, शुभं, पञ्चपातं, अभिनन्दनं, श्रीविलासाङ्कितं, श्रीरङ्गवर्धनं, शुकसारिक, सन्धानं, आक्रन्दं, दुरम्बितीयं, उन्मत्तरागं, रागकदम्बाख्यं, मनोरमं, चतुर्मुखं, चतुरङ्गं, स्वरप्रबन्धाख्यं, अनेकतालं, स्तवमंजरि, सिंहलील मिश्र साराधं

शुद्धस्वरार्धं, ताहढेयं, क्रमजं, द्विगुणं, द्विपदि, प्रमोदं, स्वरसन्दोहं, प्रतापमङ्गलं, जयमङ्गलाचारं, सूलादितालं, रच्छ, गुरुलघुध्रुवतालं, (२) द्रुतं (२) लघुपुमं, अड्डुतालि, गुरुलघु, रूपकं, त्रिगुरु, मटियं. द्विगुरुद्रुता, त्रिगुरुपडिमटियं, लघु, एकतालि, त्रिपदएकं, शुद्ध, सूलादि, (७) पट्टणयुंकरणमुमोद्रिय अञ्चुशुद्धसूलादि इति ॥

॥ इति गीतप्रबन्धमेकोत्तरशतम् ॥

**शब्दप्रबन्धतालं**—चच्चत्पुटं, त्रि(भिण)[भिन्न]मकरन्दं, मल्लिकामोदि, चच्चरि, गङ्गारमणं, त्रिभङ्गि, समराल, नन्दनं, द्विपदं, क्रौञ्चपदं, सलील, मातृकं, परितालं, जयमंगलं, विषमकङ्कालं, मर्दनं, जयं, करणं, चाचपुटं, वसन्तं, अभिनन्दः, पार्वतिलोचनं, रितिकंकाणिक, सान्दिमाध्विकं, मतङ्गं, षट्पिता पुत्रिकं, प्रतिनिस्सालं, तुरङ्गलील, विजयं, तुङ्गप्रदीपं, विलोकितं, आनन्दं, अभंगं, अक्षिपुटः, संपद्वेष्टाकं, कन्तुकं, त्रितयं, पांजुलि, राजझम्प, ललितं, श्रीनन्दं, श्रीखण्डनं, रङ्गं, कीर्तिचतुर्मुखं, प्रथमपत्, त्वद्वूर्णं, भिन्नोत्सवं, रंगोद्योतिकं, सिंहलील, विजय, विजयश्री, श्रीकीर्ति, सत्तालं, तुङ्गागारु(रिकि)[गि]गीतमुद्रिकं, ससौम्यं, राजनारायणं, अंगाक्षरं, शेखरं, शरभलील, सिंहक्रीडितं, शीलाकर्णनं, विद्रुमादिगजलील, आकन्दचूडामणि, चूडामणितालं, कोकिलपांसुलील, रतिलील, चौतालं, चौतालाङ्कं, गजा(त्स)[झ]म्प, वेषक्रीडाक्षिविधापरितालं, विद्याधरवर्धनं, एकतालं, जसकं, प्रत्यङ्ग, विद्वेषणं, आसारमालिक, लक्ष्मीशं, भूतिलकि, तालविध्वंसं, वाग्भूषणं, भाषालक्ष्मि, लक्ष्मीविभूषणं, भूषणं, दुर्घटपञ्चकं, त्रिगुरु, उद्घट्टतालं, आदिमध्यान्तद्रुतमिश्रं, सिंहनादं, जगणान्तं, त्रिगुरुमिश्रं, राजविद्याधरं, सर्वत्र द्रुतमिश्रं, बिन्दुतालं, संकीर्णधूलादि, मंगलमोन्मुकुटशब्दतालमेकोत्तरशतम् । गानं, गीतम् ॥

ससाममागगारीरी ससाचपानिनीददाः ।
उदात्तादिभिदि ग्रामा इति प्रोक्तं च शम्भुना ॥ ६६६ ॥

द्विस्वरजादि ससरीरि ससारीरि गागरीरि गमामगगा ममपापममापपदा दपपा धधनी निधधानिनिसा सनिनी, त्रिस्वर....दिः सरिगगगागरि सारिगममममगरीगमपपापपमगामपधधाधधपमापपनिनीनिनिधपाधनिससासससनिधा ।

चतुः स्वरादिः सरिगमामगरिसारिगमग्गपमगरिगमपधाधपमगागमपधनी-निधपमापधनिसासनिसासनिधपा ।

स्वरसङ्कोचः—

त्रिपञ्चकं, षड्जे षोडशऋषभस्वरे ॥ ६६७ ॥

दश सप्तोत्तरं गायन्त्रिषट्कं मध्यमस्वरे ।
एकोनविंशतिश्चेति पञ्चमे विंशतिस्तथा ॥ ६६८ ॥

धैवते च निषादे च स्वराणामेकविंशतिः ।
एतच्छतं त्रयस्त्रिंशत् हितन्तुचतुष्टयम् ॥ ६६९ ॥

अयुतं चाहतं प्रोक्तं शेषत्रितयनिर्णयम् ।
एकविंशतिभेदेन स्वराणां तत्त्रयं भवेत् ॥ ६७० ॥

मन्द्रं मध्यं च तारं च अनुतारं चतुर्विधम् ।
मन्द्राच्च त्रिगुणं मध्यं मध्यात्तारं तु षड्गुणम् ॥ ६७१ ॥

तारकाद्द्वादशगुणमनुतारं प्रकीर्तितम् ।
षड्जे ऋषभगान्धारे मध्यमे पञ्चमे ततः ॥ ६७२ ॥

धैवते च निषादे च अनुताराष्टकं भवेत् ।

इत्यष्टस्वराः ॥ द्वाविंशतिः श्रुतिः ।

कलासरिगमे चैव द्विकला च पदानि च ।
अनुषड्जानुतारं वा मात्राद्वादशकं भवेत् ॥ ६७३ ॥

मूर्छना, आरोहः, सरिगमपधनि, रिगमपधनिस, गमपधनिसरि, मपधनिस सरिग, पधनिसरिगम, धनिसरि, गमप, निसरिगमपध । मूर्छनावरोहम् ।

निधपमगरिस । धपमगरिसनि । पमगरिसनिध । मगरि सनिधप । गरिस निधपम । रिसनिधपमगा । सनिधपमगरि । इत्यवरोहः । तानम् ।

वीथीषु सप्तसु चतुर्दशकोष्ठक्लृप्त्या
कोष्ठानि चाष्टनवतीस्वरसंभवानि ।
आरभ्य मध्यम इहाधिपतिः स्वरः स्यात्
वीथीशिरस्सु सकलेष्वपि तत्र तत्र ॥ ६७४ ॥

शुद्धरागं, वृषभरागं, शुनिपादा संनिधानिनीनसधनीसनिधपमगरिस। गागारी। रक्तगान्धारं, ससानिनीधधापापा मगागा। सरिममाममापामामा गरिसा। मार्गरागम्। धधनिनिसानिधपागमागरिसनिधपमगरिसा इति क्रमात्। शुद्धरागाः। सालगरागम्। मध्यमादि। सनिधपमगरिमा गरिसा। रिगमूनं यथामार्गं वराटी रामक्री। सनिधपमगरिमापागरिसासरिमपधनिसा। धवर्जे ललिता। वयुक्ते फलमंजरी। धनाशी। समसनिधपमगरिसा। शुद्धभैरवम्। सरि........पमगामागारी। मल्हरी। सानीधपमपामासनिधपमगारिपामगारी-निरी। (कुञ्जरी)[कुरञ्जी] धानीसाधनिसापम्मपधानिधपमंगामपाधा निधपमं गामागरिगमपधनिसा। मालवगौडः। सनिधपमपासैसासगरिमसमा। कर्णाट-गौडः। धानीसानीसासनिधपमधानिसासनिधप मगरिसा। छायागौडः। सनिधपामगारिनिसरिसा। नाट सनिधपमंगारीसा नीसारी। देशाक्षि। निसाधनिसाधनिधमदनिसासानिधपमगरिसा। सौराष्ट्रम्। पपासापासनिधपपप-पापधपमनिधपगा। नारायणगौडं। ससससरिगसामपामगारिधधपपमामसासारी। पूर्वगौडम्। सनिधपमगरिसानिनीसारी। भूपालक्रि। निनिनिनीधपामगरिरी-मगापामा। गुण्डक्री। पपधधनीधानीधप मापधसानिधपमगारी। रेवगुप्तः। पपपपानिधपमंगममम पामगारीममपपपपम्मा पाक्रीगणप्रस्तारमितिलक्षणम्। मयरसतजभनचन्नर। त्रिगुरुमगणं। त्रिलघुनगणं मध्यलघुरगणम्। अन्त गुरुसगणं। अन्तलघु तगणम्। मध्यमगुरुजगणम्। आदिगुरुभगणम्। आदिलघुयगणम्।

इति.........गणप्रस्तारः॥

मङ्गलकौशिकी—पपापमापपासारीगापागापाधासा ससनीनिधापमागरि-मामममगारी।

वेलवल्ली—रिरिससरिरिगमगरीरिगमगरीरिमामपपमगारिधससससरिमपा-धमपधामागमा।

मालवश्री—सानीधा पासानीधानी सनिधपमगरिसारी॥

इत्यौमापते गीतशास्त्रे प्रबन्धभेदो नामाष्टत्रिंशोऽध्यायः।
उमापतीयं समाप्तम्॥

एका खड्गनिकृत्तवैरिरुधिरैरन्या तदीयाङ्गना
बाष्पासारपरंपराभिरपरा सत्पात्रदानाम्बुभिः ।
एकामेव भगीरथो भुवि नदीं गङ्गामवातीतरत्
लोकेऽस्मिन्भुवनैकवीर भवता नद्यश्चतस्रः कृताः ॥

आधारेलिङ्गनादौ हृदयसरसिजे तालमूले ललाटे
द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्धे चतुष्के ।
वासान्ते फालमध्ये डथखरसहिते सारसर्गेक्षहान्ते
मध्ये हंसः सुसूक्ष्मं सकलदलयुतं वर्णरूपं नमामि ॥

श्रीवेदव्यासाय नमः ॥ श्रीसरस्वत्यै नमः ॥

श्री गुरुभ्यो नमः ॥ हरिहराभ्यां नमः ॥